**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५

© प्रकाशकस्य एव ।

१ - १० मुद्रणम् - ५०,०००.००
एकादशं मुद्रणम् - २०१० - ५,०००
द्वादशं मुद्रणम् - २०११ - ५,०००

मूल्यं - **रू. २०.००**

मुद्रणम् -
**वागर्थ**
एन्. आर्. कालोनी, बेङ्गलूरु - १९

**ISBN 978-81-88220-34-5**

**VIBHAKTI VALLAREE** - A Samskrit work book for beginners on 'Case'.
*Publisher* - **SAMSKRITA BHARATI** - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085. Ph : 26721052 / 26722576, Fax : 26722576, E-mail : samskritam@gmail.com

Pages - iv + 76 Price - Rs. 20-00 Twelfth Print - Nov - 2011
*Printed at* - Vagartha, N. R. Colony, Bangalore - 560 019

# प्रस्तावना

## (प्रथमस्य मुद्रणस्य)

भाषापाठनक्षेत्रे भाषाप्रचारक्षेत्रे च बहुविधान् प्रयोगान् करोति संस्कृतभारती । विभिन्नाः पद्धतीः अवगत्य, विविधानि तन्त्राणि आश्रित्य, विभिन्नान् अभ्यासान् रचयित्वा, विविधानि कौशलानि उपयुज्य अनक्षरज्ञाः, अनभिज्ञाः, अल्पज्ञाः, अधीयानाः, अभिज्ञाः, विशेषज्ञाः इत्यादयः विभिन्नस्तरीयाः संस्कृतभारत्या पाठिताः । एवं पाठनसमये सज्जीकृतेषु अभ्यासेषु विभक्तिसम्बद्धान् अभ्यासान् पृथक्कृत्य पुस्तकरूपेण प्रकशयन्ती अस्ति संस्कृतभारती ।

द्वितीयाविभक्त्यादिक्रमेण अत्र अभ्यासाः दत्ताः सन्ति । यत्र अभ्यासिभिः विभक्तिः योजनीया भवति तत्र, अकारान्तपुंलिङ्ग-नपुंसकलिङ्गयोः आकारान्त-स्त्रीलिङ्गस्य, ईकारान्तस्त्रीलिङ्गस्य च शब्दाः प्रदत्ताः । तदेतदादीनां सर्वनाम्नां रूपाणि अपि प्रयुक्तानि । अतः प्राथमिकाभ्यासिनः विशेषक्लेशं विना एतस्य पुस्तकस्य उपयोगं कर्तुं समर्थाः भवन्ति इति वयं विश्वसिमः ।

अत्र सङ्कलिताः अभ्यासाः विविधेषु प्रसङ्गेषु कार्यकर्तृभिः स्वप्रतिभया आविष्कृताः । नदीं गतानि जलानि इव एते कार्यकर्तृप्रयत्नाः अपि पृथगभिज्ञानरहिताः सन्ति । अतः नामग्रहणपूर्वकं कृतज्ञतां समर्पयितुम् अशक्नुवन्तः वयं 'परिश्रमं कृतवद्भ्यः सर्वेभ्यः नमः' इति एतावत् एव वदामः ।

अत्र उपयुक्तानि चित्राणि लिङ्गदेवरुवर्येण चित्रितानि । तस्मै, मुद्रणकार्ये सहकृतवद्भ्यः मुद्रणालयबन्धुभ्यः च वयं कृतज्ञतां समर्पयामः ।

श्रीमुख सं।। श्रीकृष्णजन्माष्टमी — **प्रकाशकः**
१०.८.१९९३

## (द्वादशस्य मुद्रणस्य)

भाषाभ्यासक्षेत्रे जनप्रियतां गता एषा विभक्तिवल्लरी द्वादशं मुद्रणं प्राप्नुवती अस्ति । भाषाभ्यासं कर्तुम् इच्छवः इतः अधिकं लाभं प्राप्तवन्तः सन्ति इति तु अनुभवसिद्धः विषयः । एतस्य मुद्रणे उपकृतवतः सर्वान् कृतज्ञतापूर्वकं स्मरामः ।

खर सं।। कार्तिकशुक्लसप्तमी — **प्रकाशकः**
२.११.२०११

# अनुक्रमणिका



# द्वितीया

वाक्ये क्रियासूचकं पदं **क्रियापदम्** । कर्तृसूचकं पदं **कर्तृपदम्** । यत् कर्म सूचयति तत् **कर्मपदम्** । कर्मपदस्य द्वितीयाविभक्तिः भवति ।

उदा - बालकः पाठं पठति ।

बालिका मालां रचयति ।

सः फलं खादति ।

I. अभ्यासः - *आवरणे स्थितानां शब्दानाम् उचितानि रूपाणि रिक्ते स्थले लिखत ।*

उदा - सः प्रतिदिनं ............ (ग्रन्थः) पठति ।
सः प्रतिदिनं ग्रन्थं पठति ।

१. कर्मकरः ................................ (वृक्षः) सिञ्चति ।
२. सज्जनः ................................ (धर्मः) पालयति ।
३. अहं ................................ (शब्दः) शृणोमि ।
४. सा ................................ (इतिहासः) स्मरति ।
५. ते ................................ (विद्यालयः) गच्छन्ति ।
६. सेविका ................................ (आपणः) गच्छति ।
७. स्वामिनी ................................ (सेविका) आह्वयति ।
८. जनकः ................................ (पत्रिका) पठति ।
९. बालकः ................................ (जननी) नमस्करोति ।
१०. माता ................................ (पुत्री) बोधयति ।

**II.** एतानि वाक्यानि पठत ।

१. रामः पाठं | पठित्वा | निद्रां करोति ।

२. बालकः हस्तं | प्रक्षाल्य | भोजनं करोति ।

३. छात्राः पाठं | पठितुं | विद्यालयं गच्छन्ति ।

४. बालिका पाठं | पठन्ती | एव निद्रां कृतवती ।

एतेषु वाक्येषु चतुरस्रचिह्नेन ☐ क्रमशः क्त्वान्तं, ल्यबन्तं, तुमुन्नन्तं, शत्रन्तं च पदं सूचितम् । तेभ्यः पूर्वं स्थितानि कर्मपदानि अधोरेखया सूचितानि । तेषाम् अपि द्वितीया भवति इत्येतम् अंशं परिशीलयत ।

अभ्यासः - *आवरणे सूचितानां शब्दानाम् उचितरूपाणि रिक्ते स्थले लिखत ।*

१. भवती ........................ (विषयः) ज्ञात्वा अग्रे पठतु ।

२. छात्राः ........................ (प्रश्नः) पृष्ट्वा विषयं जानन्ति ।

३. बालिका ............... (लेखनी) पातयित्वा रोदनं कृतवती ।

४. ते ........................ (पत्रिका) पठित्वा विषयं जानन्ति ।

५. माता .................. (पाकः) समाप्य सखीगृहं गतवती ।

६. भवान् सदा सज्जनानां .......... (व्यवहारः) अनुसृत्य गच्छतु ।

७. सः ..................... (देवी) नमस्कृत्य विद्यालयं गच्छति ।

८. भगिनी ............... (शाटिका) प्रक्षाल्य आतपे प्रसारितवती ।

९. ........................ (अभ्यासः) कर्तुं मम समयः नास्ति ।

१०. .............. (भक्तः) अनुग्रहीतुं देवः भूलोकम् आगतवान् ।

११. ........................ (अङ्कनी) क्रेतुं सा आपणं गतवती ।



१२. सः मित्रस्य .............. (टिप्पणी) स्वीकर्तुं तस्य गृहं गतवान् ।

१३. शिशुः ...................... (अम्बा) स्मरन् रोदनं कृतवान् ।

१४. भक्तः ......................... (मन्त्रः) पठन् पूजां करोति ।

१५. कृषिकः ......................... (कृषिः) कुर्वन् जीवति ।

१६. बालकाः .............. (विद्यालयः) गच्छन्तः पाठं स्मरन्ति ।

१७. आपणिकः .............. (ग्राहकाः) दृष्ट्वा सन्तोषम् अनुभवति ।

१८. पितामहः ............... (देवाः) पूजयित्वा भोजनं करोति ।

१९. ...................... (तण्डुलाः) क्रेतुं सः आपणं गच्छति ।

२०. सः ......................... (जनाः) आहूय नीतिं बोधयति ।

२१. ............... (छात्राः) बोधयन् अध्यापकः तृप्तिं प्राप्नोति ।

२२. पितामही ............... (कथाः) उक्त्वा बालान् तोषयति ।

२३. अद्य .................. (पाठाः) पठितुं मम उत्साहः नास्ति ।

२४. गृहस्वामी .............. (बान्धवाः) सम्प्रेष्य गृहं प्रत्यागतवान् ।

२५. .................. (पत्रिकाः) पठितुं सः ग्रन्थालयं गतवान् ।

*अधः स्थितानि वाक्यानि पठत ।*

१. सः **पाठं** पठति ।

२. सः **पाठं** पठितवान् ।

३. सः **पाठं** पठिष्यति ।

४. सः **पाठं** पठतु ।

५. सः **पाठं** पठित्वा गृहं गतवान् ।

६. सः **पाठं** पठितुं पुस्तकं स्वीकृतवान् ।

७. सः **पाठं** विलिख्य (= लिखित्वा) गृहं गतवान् ।

८. सः **पाठं** पठन् निद्रां कृतवान् ।

**III.** अभ्यासः – *उपरि अष्टविधानि वाक्यानि लिखितानि । एतेषाम् आधारेण अधः सूचिते प्रसङ्गद्वये प्रथमवाक्यं दृष्ट्वा अवशिष्टानि सप्त वाक्यानि लिखत ।*

(i) १. कविः श्लोकं लिखति ।

२. .............................. ।

३. .............................. ।

४. .............................. ।

५. .............................. ।

६. .............................. ।

७. .............................. ।

८. .............................. ।

(ii) १. बालकः लेखनीं क्रीणाति ।

२. .............................. ।

३. .............................. ।

४. .............................. ।

५. .............................. ।

६. .............................. ।

७. .............................. ।

८. .............................. ।



**IV.** *आवरणे दत्तानां शब्दानाम् उचितानि रूपाणि रिक्ते स्थले लिखत ।*

उदा – सः प्रातः पत्रिकां (पत्रिका) कवितां (कविता) ग्रन्थं (ग्रन्थः) च पठति ।

१. रमेशः प्रतिदिनं ............... (देवः) ............ (जनकः) .......... (अग्रजः) .......... (आचार्यः) च नमस्करोति ।

२. सीता .................. (ग्रन्थः) ............ (सुधाखण्डः) .......... (स्यूतः) .......... (दण्डः) च नयति ।

३. सेवकः ............... (आम्रः) ................ (पनसः) .................. (नारिकेलः) च सिञ्चति ।

४. रामः ................. (दशरथः) .............. (सुमन्त्रः) ........(वसिष्ठः) च नमस्कृतवान् ।

५. सज्जनः ................ (धर्मः) ............ (परोपकारः) ................. (सदाचारः) च इच्छति ।

६. भगिनी आपणतः ............ (माला) ............ (पत्रिका) ......... (पादरक्षा) ........ (स्थालिका) च आनीतवती ।

७. बालकः .............. (लेखनी) ................ (अङ्कनी) .......... (कादम्बरी) .........., (सूची) च क्रीतवान् ।

८. माता .................. (स्यूतः) ................ (युतकम्) .......... (वेष्टी) .......... (शाटिका) च क्षालितवती ।

९. अहं ................ (कोलाहलः) ............ (कलहः) .......... (चर्चा) ......... (आलस्यं) च न इच्छामि ।

१०. अहं .............. (गणेशः) ............ (दुर्गा) ..........
(सरस्वती) ............ (लक्ष्मीः) च पूजयामि ।

११. गोविन्दः ................ (जनाः) .............. (आपणाः)
................. (दीपाः) ........... (वृक्षाः) च पश्यति ।

१२. वयं गणेशोत्सवावसरे ............ (भगिन्यः) ............
.......... (जनन्यः) ......... (महिलाः) ........(उद्योगिन्यः)
च गृहं प्रति आह्वयामः ।

१३. वायुः .................... (पुरुषाः) ........... (महिलाः)
......... (वृक्षाः) .............. (वनानि) ..............
(गुल्माः) च स्पृशति ।

१४. गोपालः ............. (कवयित्र्यः) ............. (गृहिण्यः)
.............. (कर्मकर्यः) च निमन्त्रयति ।

१५. अहम् ................ (अङ्कन्यः) .............. (लेखन्यः)
............ (कर्तर्यः) च क्रीतवान् ।

*कोष्ठकस्थानि रूपाणि स्मरत –*

| | पुं ए.व. | पुं ब.व. | स्त्री ए.व. | स्त्री ब.व. | नपुं ए.व. | नपुं ब.व. |
|---|---|---|---|---|---|---|
| अकारान्तः | बालम् | बालान् | | | पुस्तकम् | पुस्तकानि |
| आकारान्तः | ____ | ____ | बालिकाम् | बालिकाः | ____ | ____ |
| ईकारान्तः | ____ | ____ | लेखनीम् | लेखनीः | ____ | ____ |



V. **जानाति ।** **आनीतवान् ।**

| जानाति । | | आनीतवान् । | |
|---|---|---|---|
| १. वेदाः | ✓ | ११. स्यूताः | ✓ |
| २. मन्त्राः | ✓ | १२. ग्रन्थाः | ✓ |
| ३. शब्दाः | ✗ | १३. सुधाखण्डाः | ✗ |
| ४. आपणाः | ✓ | १४. पुस्तकानि | ✗ |
| ५. विज्ञानवार्ताः | ✗ | १५. यानपेटिकाः | ✗ |
| ६. चर्चाः | ✗ | १६. अङ्कन्यः | ✓ |
| ७. काव्यानि | ✓ | १७. लेखन्यः | ✗ |
| ८. शास्त्राणि | ✓ | १८. घट्यः | ✓ |
| ९. श्लोकाः | ✗ | १९. कर्तर्यः | ✗ |
| १०. सदाचाराः | ✓ | २०. पत्रिकाः | ✓ |

*रामः यत् जानाति तत् '✓ ' चिह्नेन, यत् न जानाति तत् '✗ ' चिह्नेन च उपरि सूचितम् । तथैव सः यत् आनीतवान् तत् '✓ ' चिह्नेन, यत् न आनीतवान् तच्च '✗ ' चिह्नेन च सूचितम् । एतदाधारेण वाक्यानि लिखत ।*

उदा – १. रामः वेदान् जानाति ।

२. ........................................ ।
३. ........................................ ।
४. ........................................ ।
५. ........................................ ।
६. ........................................ ।
७. ........................................ ।
८. ........................................ ।
९. ........................................ ।
१०. ........................................ ।

११. रामः स्यूतान् आनीतवान् ।
१२. ........................................ ।
१३. ........................................ ।
१४. ........................................ ।
१५. ........................................ ।
१६. ........................................ ।
१७. ........................................ ।
१८. ........................................ ।
१९. ........................................ ।
२०. ........................................ ।

VI. *अधः यानि वाक्यानि निर्दिष्टानि तेषु, गोविन्दः क्रियां कृतवान् वा न वा इति, '✓' '✗' चिह्नद्वयं सूचयति । कर्मपदस्य प्रथमाविभक्तिरूपम् अपि निर्दिष्टम् अस्ति । एतदाधारेण द्वितीयाविभक्तियुक्तानि वाक्यानि लिखत ।*

उदा - | गोविन्दः प्राध्यापकाः दृष्टवान् । ✗
| गोविन्दः प्राध्यापकान् न दृष्टवान् ।

१. गोविन्दः पण्डिताः दृष्टवान् । ✓
........................................ ।
२. गोविन्दः ग्रन्थाः परिशीलितवान् । ✗
........................................ ।
३. गोविन्दः केशसूच्यः क्रीतवान् । ✓
........................................ ।
४. गोविन्दः उपन्यासाः कृतवान् । ✗
........................................ ।
५. गोविन्दः चिन्तनगोष्ठ्यः गतवान् । ✗
........................................ ।
६. गोविन्दः बालिकाः ताडितवान् । ✓
........................................ ।



७. गोविन्दः बहुविधकथाः श्रुतवान् । ✓
........................................ ।
८. गोविन्दः कादम्बर्यः पठितवान् । ✗
........................................ ।
९. गोविन्दः ह्यः पत्रिकाः पठितवान् । ✓
........................................ ।
१०. गोविन्दः बान्धवाः सत्कृतवान् । ✓
........................................ ।

VII. *अधः एकं सम्भाषणम् अस्ति । सम्भाषणं पठत । आवरणे विद्यमानानां शब्दानाम् उचितानि रूपाणि रिक्ते स्थले लिखत ।*



गीता - ह्यः भवती किमर्थं ......... (विद्यालयः) न अगतवती ?
माला - ह्यः अहं ....... (ग्रामः) गतवती आसम् ।
गी - ......... (ग्रामः) किमर्थं गतवती भवती ?
मा - प्रतिवर्षं मम पितामहः ....... (देवीपूजा) करोति । अतः अहं ............ (ग्रामः) गतवती ।
गी - ग्रामे भवती किं किं कृतवती ?
मा - अहं ग्रामे ......... (लीला) .......... (लता) च दृष्टवती । अहम् अपि ..... (पूजा) कृतवती । पितामहेन सह ......... (सम्भाषणम्) कृतवती । .................. (बीजपूरवृक्षः) आरुह्य ........ (फलानि) खादितवती । अस्तु, ह्यः अध्यापकः ........ (कः)........ (पाठः) पाठितवान् ?
गी - ह्यः अध्यापकः ........... (पाठः) न पाठितवान् । अपि तु ............... (श्लोकाः) पाठितवान् ।
मा - तृतीयपाठस्य विषये सः ...... (प्रश्नाः) पृष्टवान् वा ?

गी - आं, सः ......... (प्रश्नाः) पृष्टवान् । वयम् ................ (उत्तराणि) उक्तवन्तः ।

मा - ह्यः गायत्री किं ................. (कक्ष्या) आगतवती ?

गी - आम् । सा ......... (नूतनः) ......... (चोलः) .......... (निचोलः) च धृत्वा आगतवती । ह्यः तस्याः जन्मदिनम् । अतः सा सर्वेभ्यः ....... (चाकलेहाः) दत्तवती । सा ........ (अध्यापकाः) नमस्कृतवती । अध्यापकाः ..... (आशीर्वादः) कृतवन्तः । वयम् .......... (अभिनन्दनवचनानि) उक्तवन्तः ।

VIII. ***'परितः' इत्येतस्य शब्दस्य योगे द्वितीया भवति ।***

उदा - मम गृहं परितः उद्यानम् अस्ति ।



विशेषः - हिन्दीभाषायां 'घर के सभी ओर' इति षष्ठी भवति । संस्कृते तु द्वितीया एव इति सर्वदा स्मरत ।

(i) अभ्यासः - *चतुरस्त्रे सूचितानां शब्दानाम् आधारेण वाक्यानि लिखत ।*

| | | |
|---|---|---|
| १. देवालयः | | प्राकारः |
| २. शाला | | क्रीडाङ्गणम् |
| ३. शर्करा | | पिपीलिकाः |
| ४. चन्द्रः | | मेघाः |
| ५. वेदिका | परितः | प्रेक्षकाः |
| ६. सा | | सख्यः |
| ७. अध्यापकाः | | बालकाः |
| ८. अध्यापिकाः | | बालिकाः |
| ९. दीपाः | | कीटाः |
| १०. पुष्पाणि | | भ्रमराः |



१. देवालयं परितः प्राकारः अस्ति ।

२. ........... ......... .......... .......... ।

३. ........... ......... .......... .......... ।

४. ........... ......... .......... .......... ।

५. ........... ......... .......... .......... ।

६. ........... ......... .......... .......... ।

७. ........... ......... .......... .......... ।

८. ........... ......... .......... .......... ।

९. ........... ......... .......... .......... ।

१०. ........... ......... .......... .......... ।

(ii) *अधस्तनचित्रस्य आधारेण किं परितः किम् अस्ति इति लिखत ।*




१. कमलं परितः भ्रमराः सन्ति ।

२. ........... ......... .......... .......... ।

३. ........... ......... .......... .......... ।

४. ........... ......... .......... .......... ।

५. ........... ......... .......... .......... ।

६. ............ ........... ......... .......... ।

७. ........... ............ .............. .......... ।

८. ........... ............ किमपि नास्ति ।

IX. **'उभयतः'** इत्यस्य पदस्य योगे अपि द्वितीया एव भवति ।

यथा – मम गृहम् [उभयतः] सस्यानि सन्ति ।



चित्रं पश्यत । गृहस्य वामतः दक्षिणतः च (पार्श्वद्वये) केवलम् अत्र वृक्षाः सन्ति । अतः 'उभयतः' इति प्रयोगः कृतः । दशमे पृष्ठे स्थितं चित्रं पश्यत । तत्र गृहस्य पुरतः पृष्ठतः वामतः दक्षिणतः च (सर्वासु दिक्षु) उद्यानम् अस्ति । अतः तत्र परितः इति प्रयोगः कृतः । अतः तात्पर्यम् एवं सिद्ध्यति –

परितः = सर्वासु दिक्षु । उभयतः = पार्श्वद्वये केवलम् ।

(विशेषः = हिन्दीभाषायां तु 'घर के दोनो ओर' इति षष्ठी प्रयुज्यते । संस्कृते तु द्वितीया एव ।

अभ्यासः – *चतुरस्त्रे सूचितानां शब्दानां साहाय्येन वाक्यानि रचयत ।*

| | | | |
|---|---|---|---|
| १. | आरक्षकाः | महाचोरः | आरक्षकाः |
| २. | सख्यः | लता | सख्यः |
| ३. | छात्राः | अध्यापकः | छात्राः |
| ४. | धान्यापणाः | वस्त्रापणः | धान्यापणाः |
| ५. | वृक्षाः | द्वारम् | वृक्षाः |
| ६. | आपणाः | भवनम् | आपणाः |
| ७. | आसन्दाः | उत्पीठिका | आसन्दाः |
| ८. | भक्ताः | देवः | भक्ताः |
| ९. | गजाः | लक्ष्मीः | गजाः |
| १०. | कर्मकराः | वृद्धः | कर्मकराः |



१. महाचोरम् उभयतः आरक्षकाः सन्ति ।

२. ........... ........... ........... ........... ......... ।

३. ........... ........... ........... ........... ......... ।

४. ........... ........... ........... ........... ......... ।

५. ........... ........... ........... ........... ......... ।

६. ........... ........... ........... ........... ......... ।

७. ........... ........... ........... ........... ......... ।

८. ........... ........... ........... ........... ......... ।

९. ........... ........... ........... ........... ......... ।

१०. ........... ........... ........... ........... ......... ।

X. 'रामः फलं खादति' इत्यत्र 'फलम्' कर्मपदम् । एतस्मिन् वाक्ये एकं कर्म अस्ति ।

'रामः अध्यापकं प्रश्नं पृच्छति' – इत्येतस्मिन् वाक्ये 'अध्यापकम्' इति, 'प्रश्नम्' इति च कर्मपदम् । एवम् अत्र कर्मपदद्वयम् अस्ति । अतः एतत् **द्विकर्मकं** वाक्यम् ।

संस्कृते व्यावहारिकतया[1] ४ धातवः (एतदर्थकाः अन्ये धातवः च) द्विकर्मकाः इति प्रसिद्धाः । ते च – १. वदति । २. पृच्छति । ३. प्रार्थयति[2] । ४. नयति ।

अभ्यासः – *आवरणे दत्तानां शब्दानां साहाय्येन रिक्तानि स्थलानि उचितैः रूपैः पूरयत ।*

उदा –

> कर्मकरः ........ (धनिकः) ..........
> (वस्तुस्थितिः) वदति ।
> कर्मकारः धनिकं वस्तुस्थितिं वदति ।

१. दुह्, याच, पच्, दण्ड् इत्यादयः १६ धातवः द्विकर्मकाः । किन्तु उपरि निर्दिष्टाः चत्वारः धातवः एव व्यवहारे बहुधा उपयुज्यन्ते । अन्येषाम् उपयोगः विरलः ।

२. अर्थधातुः आत्मनेपदी । 'प्रार्थयति' इति प्रयोगः अपि अस्ति । (णिजन्तात् णिच् उच्यते तत्र) तदेव रूपम् अत्र उपात्तम् ।

१. पान्थः ...... (आपणिकः) ........ (मार्गः) पृच्छति ।

२. भिक्षुकः ..... (गृहिणी) ...... (अन्नं) प्रार्थयते ।

३. कर्मकरः ..... (सम्मार्जनी) ..... (प्रकोष्ठः) नयति ।

४. बालिका ...... (विद्यालयः) ........ (लेखनी) नयति ।

५. आचार्यः ........ (छात्राः) ....... (गीता) बोधयति ।

६. पितामही ...... (पौत्राः) ...... (कथाः) कथयति ।

७. प्रजाः ........ (महाराजः) ...... (क्लेशाः) निवेदयन्ति ।

८. अपराधी ...... (आरक्षकः) ...... (क्षमा) प्रार्थयते ।

९. अध्यापकः ...... (छात्राः) ........ (प्रश्नाः) पृच्छति ।

१०. सः ........ (वयम्) ...... (मन्त्राः) उपदिशति ।

**XI.** *बालकः कं/कान् जानाति, कं/कान् न जानाति इति अधः चित्रे निर्दिष्टम् अस्ति । तदाधारेण वाक्यानि रचयत ।*






| उदा - १. बालक | तं | जानाति । | एतं | न जानाति । |
|---|---|---|---|---|

| | | | | | | |
|---|---|---|---|---|---|---|
| २. | बालकः | ......... | जानाति । | ........ | न जानाति | । |
| ३. | ,, | ......... | ,, । | ........ | ,, ,, | । |
| ४. | ,, | ......... | ,, । | ........ | ,, ,, | । |
| ५. | ,, | ......... | ,, । | ........ | ,, ,, | । |
| ६. | ,, | ......... | ,, । | ........ | ,, ,, | । |
| ७. | ,, | ......... | ,, । | ........ | ,, ,, | । |
| ८. | ,, | ......... | ,, । | ........ | ,, ,, | । |

**XII.** *अधोनिर्दिष्टं कोष्टकं पठत ।*

| द्वितीयान्तानि रूपाणि | | | |
|---|---|---|---|
| | पुं. | स्त्री. | नपुं. |
| इकारान्तः | हरिम् हरीन् | मतिम् मतीः | दधि दधीनि |
| उकारान्तः | गुरुम् गुरून् | धेनुम् धेनूः | मधु मधूनि |
| ऋकारान्तः | पितरम् पितॄन् | मातरम् मातॄः | .......... |
| ऋकारान्तः | कर्तारम् कर्तॄन् | .......... | .......... |

एतस्मिन् कोष्टके पुंलिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्गानाम् इकारान्तादीनाम् द्वितीयाविभक्तेः एकवचनान्तं रूपं बहुवचनान्तं रूपं च दत्तम् अस्ति ।

(i) अभ्यासः - *अधोनिर्दिष्टानां द्वितीयाविभक्तिरूपाणि लिखत ।*

| उदा - रविः (पुं) | ए.व. | ब.व. |
|---|---|---|
| | रविम् | रवीन् |

| | ए.व. | ब.व. |
|---|---|---|
| १. भारविः (पुं) | ................ | ................ |
| २. शौरिः (पुं) | ................ | ................ |

३. शरधिः (पुं) .................. ..................
४. परिधिः (पुं) .................. ..................
५. सुमतिः (स्त्री) .................. ..................
६. वाराणसिः (स्त्री) .................. ..................
७. बन्धुः (पुं) .................. ..................
८. भीरुः (पुं) .................. ..................
९. श्रोता (पुं) .................. ..................
१०. माता (स्त्री) .................. ..................
११. पिता (पुं) .................. ..................

(ii) *आवरणे दत्तानां शब्दानां द्वितीयान्तेन रूपेण (ए.व.) रिक्तस्थलं पूरयत -*

उदा - शिष्यः गुरुम् (गुरुः) नमति ।

१. भक्तः .................................. (हरिः) नमति ।
२. सः .................................. (कविः) नमति ।
३. सा .................................. (मुरारिः) नमति ।
४. बालकः .......................... (माता) नमस्करोति ।
५. बालिका .......................... (पिता) नमस्करोति ।
६. गृहिणी .......................... (धेनुः) नमस्करोति ।
७. ग्रामीणः .......................... (उदधिः) पश्यति ।
८. कृष्णः .......................... (वेणुः) वादयति ।
९. अध्यापकः .......................... (वटुः) बोधयति ।
१०. स्नेहितः .......................... (भ्राता) आह्वयति ।



(iii) *आवरणे दत्तानां शब्दनां द्वितीयाबहुवचनान्तेन रूपेण रिक्तस्थानानि पूरयत ।*

उदा - छात्रः गुरून् (गुरु (पुं)) नमति ।

१. वनपालः ...................... कपि (पुं) दूरीकरोति ।
२. भक्ताः ...................... मुनि (पुं) प्रणमन्ति ।
३. धात्री ...................... शिशु (पुं) पालयति ।
४. सैनिकाः ...................... शत्रु (पुं) मारयन्ति ।
५. गृहस्थः ...................... अतिथि (पुं) सत्करोति ।
६. चतुरः ...................... युक्ति (स्त्री) उपदिशति ।
७. छात्रः कालिदासस्य ............ कृति (स्त्री) पठति ।
८. प्रधानाध्यापकः ................ पितृ (पुं) निमन्त्रयति ।
९. कार्यकर्त्री ...................... मातृ (स्त्री) मेलयति ।
१०. याचकः ...................... दातृ (पुं) पश्यति ।

# तृतीया

I. *क्रियायां यत् **साधनं** भवति तस्य तृतीयाविभक्तिः भवति ।*

उदा - सः दण्डेन शुनकं ताडयति ।

अभ्यासः - एतैः साधनैः भवन्तः किं कुर्तुं शक्नुवन्ति ? लिखन्तु ।

उदा - करवस्त्रम् - अहं करवस्त्रेण मुखं मार्जयामि ।

१. कर्तरी - .......... अहं कागदं कर्तयामि ।
२. कुञ्चिका - .......... अहं तालम् उद्घाटयामि ।
३. उड्डयनयन्त्रम् - .......... अहम् उड्डयनं करोमि ।
४. सीवनयन्त्रम् - .......... अहं सीवनं करोमि ।
५. विमानम् - .......... अहं सञ्चारं करोमि ।
६. सूक्ष्मदर्शकम् - .......... अहं सूक्ष्मवस्तूनि पश्यामि ।
७. कङ्कतिका - .......... अहं केशप्रसाधनं करोमि ।
८. लोकयानम् - .......... अहं प्रयाणं करोमि ।
९. दूरवाणी - .......... अहं सम्भाषणं करोमि ।
१०. द्विचक्रिका - .......... अहं विद्यालयं गच्छामि ।
११. लेखनी - .......... अहम् अक्षराणि लिखामि ।
१२. कूर्चः - .......... अहं चित्राणि लिखामि ।
१३. स्यूतः - .......... अहं वस्तूनि आनयामि ।
१४. तुला - .......... अहम् वस्तूनि तोलयामि ।
१५. दन्तकूर्चः - .......... अहं दन्तधावनं करोमि ।



II. **भावसूचकानां** शब्दानाम् अपि तृतीया भवति ।

उदा - बालकः सन्तोषेण क्रीडितुं गतवान् ।

अभ्यासः - *वाक्यस्य अन्ते दत्तस्य शब्दस्य तृतीयाविभक्त्यन्तरूपेण रिक्तस्थानानि पूरयत ।*

यथा - सः .........कृषिं करोति स्म । (परिश्रमः)
सः परिश्रमेण कृषिं करोति स्म ।

१. माता ...................... बालकं ताडितवती । (क्रोधः)
२. निर्धनः ...................... धनं सम्पादयति । (कष्टम्)
३. व्याघ्रं दृष्ट्वा पान्थः .................... कम्पते स्म । (भयम्)
४. मरणवार्तां श्रुत्वा सा .............. रोदनं कृतवती । (दुःखम्)
५. भवान् यत् करोति तत् ...................... करोतु । (आनन्दः)
६. ........................... किमपि कार्यं मा करोतु । (त्वरा)
७. सः अधिकारी सदा अपि ................. व्यवहरति । (रूक्षता)
८. भोः रक्षकाः, भवन्तः ........... भवनं रक्षन्तु । (जागरूकता)
९. मया .................. किमपि वक्तव्यं नास्ति । (विशेषता)
१०. रमा-रमेशयोः विवाहः ..................... प्रवृत्तः । (वैभवम्)
११. कष्टं यावत् वा भवतु, भवान् ........... कार्यं करोतु । (सहना)
१२. एतां वार्तां श्रुत्वा सा ............... निःश्वसितवती । (तृप्तिः)
१३. अध्यापकस्य तर्जनं श्रुत्वा सा .............. शिरः अवनमय्य स्थितवती । (लज्जा)
१४. 'कः सः ?' इति गोविन्दः ......... रामं पृष्टवान् । (कुतूहलम्)
१५. पराजयं प्राप्य सः .................... प्रतिगतवान् । (निराशता)

III. **'सह'** इति शब्दः यत्र भवति तत्र तृतीयाविभक्तिः भवति ।

उदा - पिता पुत्रेण सह नगरं गच्छति ।

अभ्यासः - वाक्यरचनार्थं सहायकानां त्रयाणां शब्दानाम् आधारेण वाक्यानि रचयत ।

यथा - लक्ष्मणः - रामः - वनम्
लक्ष्मणः रामेण सह वनं गतवान् ।

१. रविः - मित्रं - नगरम् ।

.................................................. ।

२. गोपालः - शिवः - सम्भाषणम् ।

.................................................. ।

३. गोविन्दः - भवती - चर्चा ।

.................................................. ।

४. माता - पुत्री - बन्धुगृहम् ।

.................................................. ।

५. सः - भगिनी - कलहः ।

.................................................. ।

६. कः - भवान् - आगतवान् ?

.................................................. ।

७. राजा - सैनिकाः - युद्धार्थम् ।

.................................................. ।

८. गीता - सख्यः - प्रवासार्थम् ।

.................................................. ।

९. वैद्यः - अस्वस्थाः - सम्भाषणम् ।

.................................................. ।

१०. काः - भवत्यः - आगच्छन्ति ?

.................................................. ।



IV. **'विना'** इत्यस्य शब्दस्य योगे तृतीयाविभक्तिः भवति ।

उदा - धनेन विना कोऽपि न जीवति ।

सूचना - 'विना'शब्दस्य योगे द्वितीयाविभक्तिः, पञ्चमीविभक्तिः चापि भवति ।

अभ्यासः - *कैः विना कः किं कर्तुं न शक्नोति/किं न करोति/किं करोति इति वदत ।*

यथा - लेखनी - लेखन्या विना हरिः लेखितुं न शक्नोति ।

**कर्तुं न शक्नोति -**

१. कार्यं ...... ...... रामः स्थातुं न शक्नोति ।

२. उपनेत्रम् ....... ........ सः द्रष्टुं न शक्नोति ।

३. पादरक्षा ....... ...... सा चलितुं न शक्नोति ।

४. आसन्दः ...... ....... एषः उपवेष्टुं न शक्नोति ।

५. दन्ताः ...... ..... वृद्धः चर्वणं कर्तुं न शक्नोति ।

**न करोति -**

६. आत्मविश्वासः - ..... ...... सः कार्यं न करोति ।

७. कार्यानं - ............ धनिकः सञ्चारं न करोति ।

८. कूर्चः - ..... .... चित्रकारः चित्रं न लिखति ।

९. घटी - .......... सः कुत्रापि न गच्छति ।

१०. धनं - ...... ....... जनाः जीवनं न कुर्वन्ति ।

**करोति -**

११. अग्निः - ...... ...... ऐन्द्रजालिकः दीपं ज्वालयति ।

१२. शय्या - ...... ...... अपि निर्धनः निद्रां करोति ।

१३. आहारः - ..... ..... मुनिः जीवति !

१४. लोकयानं - ...... ..... नगरजीवनं न भवति ।

१५. अन्यसाहाय्यं ..... ..... एव सः महत् कार्यं साधितवान् ।

V. *यः शब्दः* ***कारणवाचकः (हेतुवाचकः)*** *भवति तस्य तृतीया भवति ।*

उदा - मम आगमनेन सः सन्तुष्टः ।

अभ्यासः - *अधस्तनकोष्टकस्य साहाय्येन पूर्णानि वाक्यानि रचयत ।*

| | |
|---|---|
| १. एषा वार्ता | कोपः प्रवृद्धः । |
| २. एतादृशं चिन्तनम् | मनः कलुषितम् । |
| ३. अविवेकः | महती विपत् । |
| ४. धावनम् | मार्गे पतितः । |
| ५. दैवानुग्रहः | अपायः न जातः । |
| ६. कथनम् | न किमपि प्रयोजनम् । |
| ७. आगमनम् | सर्वे तूष्णीं स्थितवन्तः । |
| ८. अनारोग्यं | कृशः । |
| ९. शिरोवेदना | कार्यालयं न गतः । |
| १०. अग्निस्पर्शः | हस्तः दग्धः । |



१. एतया वार्तया तस्य कोपः प्रवृद्धः ।

२. ................................................ ।

३. ................................................ ।

४. ................................................ ।

५. ................................................ ।

६. ................................................ ।

७. ................................................ ।

८. ................................................ ।

९. ................................................ ।

१०. ................................................ ।

VI. *प्रयाणसमये यत् वाहनम् उपयुज्यते तत्* ***प्रयाणसाधनम्*** *। अतः तस्य तृतीयाविभक्तिः भवति ।*

उदा - सः द्विचक्रिकया विद्यालयं गच्छति ।

अभ्यासः - *अधः सूचितानां त्रयाणां सूच्यशब्दानां साहाय्येन वाक्यानि रचयत ।*

यथा - रामः - कार्यानम् - मैसूरुनगरम्
रामः कार्यानेन मैसूरुनगरं गच्छति ।

१. सीता - त्रिचक्रिका - गृहम् ।

................................................ ।

२. चिन्मयः - बैक्यानं - कार्यालयः ।

................................................ ।

३. जनाः - लोकयानं - गृहम् ।

................................................ ।

४. वयं - सुखयानं - ग्रामः ।

............................................... ।

५. प्रयाणिकाः - विमानं - विदेशः ।

............................................... ।

६. आरक्षकाः - जीप्यानं - कोलाहलस्थलम् ।

............................................... ।

७. एते - मेटडोर्यानं - तिरुपतिः ।

............................................... ।

८. ग्रामीणाः - नौका - तरन्ति ।

............................................... ।

९. भक्ताः - रैल्यानम् - मथुरा ।

............................................... ।

१०. राजा - रथः - मन्दिरम् ।

............................................... ।

**VII.** यदा वयं किमपि क्रीणीमः तदा **यत् धनं दीयते तस्य** तृतीयाविभक्तिः भवति ।

उदा - अहं *दशरूप्यकैः एकां लेखनीं क्रीतवान् ।

अभ्यासः - *अधः कतिभिः रूप्यकैः किं क्रीतम् इति सूचितम् अस्ति । तदाधारेण वाक्यानि रचयत ।*

यथा - रू. ८.०० - पुस्तकम्
अहम् अष्टरूप्यकैः एतत् पुस्तकं क्रीतवान् ।

*'दिक्सङ्ख्ये संज्ञायाम्' इति यद्यपि सङ्ख्यया सह समासः निराकृतः, तथापि 'नवरसरुचिरा' (मम्मटः) 'त्रिलोकनाथः' (कालिदासः) इत्यादीनां प्रयोगाणां दर्शनात् तस्य सूत्रस्य प्रायिकत्वं मन्यते ।



| | |
|---|---|
| रू. १००.०० - स्यूतः । | १. ................ । |
| रू. १२.०० - किलोमिता शर्करा । | २. ................ । |
| रू. ३५०.०० - शाटिका । | ३. ................ । |
| रू. ७५०.०० - उत्पीठिका । | ४. ................ । |
| रू. ३०.०० - कर्तरी । | ५. ................ । |

**VIII.** निषेधार्थकः **'अलं'** शब्दः यत्र प्रयुज्यते तत्र तृतीयाविभक्तिः भवति । (पर्याप्तार्थकस्य 'अलं' शब्दस्य योगे तु चतुर्थी भवति ।)

उदा - बालाः ! तूष्णीं तिष्ठन्तु । अलं कोलाहलेन ।

अभ्यासः - *आवरणान्तर्गतेन शब्देन 'अलं' शब्दं योजयित्वा वाक्यानि रचयत ।*

यथा - (जल्पनम्) - अयि भगिन्यः, अलं जल्पनेन ।

१. (अतिविस्तरः) - ............................ ।

२. (शोकः) - ................................ ।

३. (साहसम्) - .............................. ।

४. (अविवेकिता) - ............................ ।

५. (धावनम्) - .............................. ।

**IX.** *आवरणे दत्तानां शब्दानाम् उचितैः रूपैः रिक्तानि स्थलानि पूरयत ।*

१. पाचकः ................ (छुरिका) शाकं कर्तयति ।

२. अर्जुनः ............. (बाणाः) कौरवान् मारितवान् ।

३. महिला .................. (सम्मार्जनी) मार्जितवती ।

४. चित्रकारः ............. (अङ्गुल्यः) .......... (कूर्चाः) च चित्रं लिखति ।

५. भवती ...................... (का) सह आगतवती ?

६. ह्यः भवान् .............. (जननी) सह कुत्र गतवान् ?

७. दुष्टः ..................... (सर्वे) सह कलहं करोति ।

८. भवन्तः अपि ............. (वयं) सह संस्कृतं पठन्तु ।

९. ........................ (धनं) विना जीवनं कठिनम् ।

१०. .................... (दन्ताः) विना चर्वणं न शक्यम् ।

११. ..................(भक्तिः) विना पूजया कः लाभः ?

१२. भिक्षुकः .............. (आशा) द्वारसमीपं गतवान् ।

१३. ................. (विशेषता) वक्तव्यं किमपि नास्ति ।

१४. ................. (कलहः) न्यायनिर्णयः न भवति ।

१५. सः ............... (ताडनं) शुनकस्य कोपं वर्धयति ।

१६. ......... (अश्रुविमोचनं) कष्टस्य निवारणं न भवति ।

१७. औषधस्य ...... (उच्चारणमात्रं) रोगः न अपगच्छति ।

१८. ........ (वेगदूतयानं) ....... (सामिसुखयानं) वा वयं धर्मस्थलं गच्छामः ।

१९. ................ (दश दिनानि) सः अस्वस्थः अस्ति ।

२०. मित्र ! अलं .................. (चिन्ता), उत्तिष्ठतु ।



**X.** *अधः कोष्टके 'क'विभागे एकवचनरूपं दत्तम् अस्ति । 'च'विभागे त्रयः विकल्पाः सूचिताः सन्ति । 'च'विभागे स्थितं शुद्धं बहुवचनरूपं रेखया अङ्कयत ।*

| 'क' | 'च' | | |
|---|---|---|---|
| उदा - जनेन | १. जनेभ्यः | २. जनैः | ३. जनाभिः |
| (अ) चोरेण | १. चौरैः | २. चोरेभ्यः | ३. चोराणाम् |
| (आ) दन्तेन | १. दन्ताभिः | २. दन्तेभिः | ३. दन्तैः |
| (इ) भवता | १. भवतैः | २. भवद्भिः | ३. भवताभिः |
| (ई) भवत्या | १. भवतीभिः | २. भवताभिः | ३. भवतैः |
| (उ) भगिन्या | १. भगिनीभ्यः | २. भगिनीभिः | ३. भगिन्याभिः |
| (ऊ) मया | १. मयैः | २. मयाभिः | ३. अस्माभिः |
| (ए) तेन | १. तैः | २. तद्भिः | ३. ताभिः |
| (ऐ) सर्वेण | १. सर्वैः | २. सर्वेणैः | ३. सर्वेभिः |
| (ओ) कया | १. कयाभिः | २. कैः | ३. काभिः |
| (औ) लेखन्या | १. लेखनीभिः | २. लेखन्यैः | ३. लेखन्याभिः |

**XI.**

| | |
|---|---|
| सः - चर्चां कृतवान् | ते - वादं कृतवान् |
| एषः - कथां पठितवान् | एते - पाठान् पठितवान् |
| सा - गीतं गीतवान् | ताः - कार्यं कृतवान् |
| एषा - आपणं गतवान् | एताः - विपणिं गतवान् |
| भवान् - गृहम् आगतवान् वा ? | भवन्तः - क्रीडितुम् आगतवान् वा ? |
| भवती - कुत्र गतवान् आसीत् ? | भवत्यः - किमर्थं कलहं कृतवान् ? |
| अहम् - धावितवान् | वयम् - न उपविष्टवान् |

** रामः केन/कैः सह किं कृतवान् इति उपरितनकोष्टकं स्थूलतया निर्दिशति । तदाधारेण सर्वनामशब्दानां तृतीयाविभक्तिं योजयन्तः उदाहरणानुसारं वाक्यानि रचयत ।*

| कोष्टकस्थानि रूपाणि स्मरत । | | | | | | |
|---|---|---|---|---|---|---|
| | पु. | | स्त्री. | | नपु. | |
| | ए.व. | ब.व. | ए.व. | ब.व. | ए.व. | ब.व. |
| अकारान्तः | बालेन | बालैः | ...... | ...... | पुस्तकेन | पुस्तकैः |
| आकारान्तः | ..... | ...... | बालिकया | बालिकाभिः | ..... | ...... |
| ईकारान्तः | ..... | ...... | लेखन्या | लेखनीभिः | ..... | ...... |

उदा – रामः तेन सह चर्चां कृतवान् । तैः सह वादं कृतवान् ।

१. रामः ..... सह ..... ......... । ...... सह .... ...... ।
२. रामः ....... ,, ..... ......... । ...... ,, .... ...... ।
३. रामः ....... ,, ..... ......... । ...... ,, .... ...... ।
४. रामः ....... ,, ..... ......... । ...... ,, .... ...... ।
५. रामः ....... ,, ..... ......... । ...... ,, .... ...... ।
६. रामः ....... ,, ..... ......... । ...... ,, .... ...... ।

अधोनिर्दिष्टं कोष्टकं पठत ।

| द्वितीयान्तानि रूपाणि | | | |
|---|---|---|---|
| | पुं. | स्त्री. | नपुं. |
| इकारान्तः | हरिणा हरिभिः | मत्या मतिभिः | दध्ना दधिभिः |
| उकारान्तः | गुरुणा गुरुभिः | धन्वा धेनुभिः | मधुना मधुभिः |
| ऋकारान्तः | पित्रा पितृभिः | मात्रा मातृभिः | ...... ...... |
| ऋकारान्तः | कर्त्रा कर्तृभिः | .......... | ..... ...... |



**XII.** *अधोनिर्दिष्टानां तृतीयाविभक्तिरूपाणि लिखत ।*

| | | | ए.व. | ब.व. |
|---|---|---|---|---|
| उदा | कविः | (पुं) | कविना | कविभिः |

| | ए.व. | ब.व. |
|---|---|---|
| १. हिन्दुः (पुं) | .............. | .............. |
| २. सेतुः (पुं) | .............. | .............. |
| ३. सन्धिः (पुं) | .............. | .............. |
| ४. पुष्पाधानी (स्त्री) | .............. | .............. |
| ५. आसक्तिः (स्त्री) | .............. | .............. |
| ६. भुशुण्डिः (स्त्री) | .............. | .............. |
| ७. शङ्कुः (पुं.) | .............. | .............. |
| ८. याता (स्त्री) | .............. | .............. |
| ९. कार्यकर्ता (पुं.) | .............. | .............. |
| १०. पिता (पुं.) | .............. | .............. |

**XIII.** *आवरणे दत्तानां शब्दानां तृतीयान्तेन रूपेण (ए.व.) रिक्तस्थलं पूरयत ।*

उदा – विघ्नेशः मात्रा (माता) सह काशीं गमिष्यति ।

१. हरीशः ............ (श्रोता) सह चर्चां कृतवान् ।
२. नागेशः ............ (धेनुः) सह अरण्यं गतवान् ।
३. सुरेशः ............ (मुनिः) सह अग्निहोत्रम् आचरति ।
४. कल्मेशः ............. (दुहिता) सह क्रीडति ।

५. सुनीशः ............. (शम्भुः) सह चलनचित्रं दृष्टवान् ।

६. सतीशः .............. (सुमतिः) सह मातुलगृहं गमिष्यति ।

७. परमेशः ............... (भ्राता) सह कलहं कृतवान् ।

८. महेशः ............... (अतिथिः) सह वायुविहारं करोति ।

९. वेङ्कटेशः ............... (भीरुः) सह स्नेहं न इच्छति ।

१०. गिरीशः ............... (नियुद्धपटुः) सह अभ्यासं करिष्यति ।

**XIX.** *आवरणे दत्तानां शब्दानां तृतीयाबहुवचनान्तेन रूपेण रिक्तस्थानानि पूरयत ।*

उदा - विनायकः कृतिभिः (कृतिः) प्रसिद्धः ।

१. वेदिका ................. (वक्ता) शोभते ।

२. सर्वे बालाः ................. (पिता) सह आगच्छेयुः ।

३. तानि नगराणि ................. (सेतुः) विराजन्ते ।

४. ................... (उदरम्भरिः) सह अधिकस्नेहः मास्तु ।

५. सः पेटिकां ................... (रज्जुः) बद्धवान् ।

६. भ्रमराः ..................... (मधु) मोदन्ते ।

७. वाग्मी ...................... (सूक्तिः) जनान् बोधयति ।

८. भवन्तः .................. (माता) सह क्रीडन्तु ।

९. वैद्यः ..................... (दधि) औषधं निर्माति ।

१०. शिबिरस्थानं ................. (कुटिः) पूर्णमस्ति ।



# चतुर्थी

**I.** १. यत्र **दानक्रिया** अस्ति तत्र, यस्मै वयं किमपि दद्मः तस्य चतुर्थीविभक्तिः भवति ।

उदा - बलिः वामनाय भूमिं दत्तवान् ।

अभ्यासः - 'रामः कस्मै किं दत्तवान्' इति अधस्तनकोष्टकस्य साहाय्येन लिखत ।

| | पुत्रः | युतकवस्त्रम् | |
|---|---|---|---|
| रामः | पुत्री<br>मित्रं<br>पत्नी<br>कर्मकरी<br>सेविका<br>भगिनी | शाटिका<br>पुस्तकानि<br>धनम्<br>वेतनम्<br>उपायनम्<br>कण्ठहारम् | दत्तवान् |

१. रामः पुत्राय युतकवस्त्रं दत्तवान् ।

२. ................................................ ।

३. ................................................ ।

४. ................................................ ।

५. ................................................ ।

६. ................................................ ।

७. ................................................ ।

*ii. रमा केभ्यः किं दत्तवती इति लिखत ।*

| | | | |
|---|---|---|---|
| रमा | भिक्षुकाः<br>सख्यः<br>सर्वे<br>ते<br>महिलाः<br>बान्धवाः | नाणकानि<br>मधुरम्<br>पानीयम्<br>उपाहारम्<br>फलम्<br>ताम्बूलम् | दत्तवती |

१. रमा <u>भिक्षुकेभ्यः</u> नाणकानि दत्तवती ।

२. ............................................................ ।

३. ............................................................ ।

४. ............................................................ ।

५. ............................................................ ।

६. ............................................................ ।

**II. रोचते** इति यत्र प्रयोगः तत्र यस्मै रोचते तस्य चतुर्थीविभक्तिः भवति । (यत् रोचते तस्य तु प्रथमाविभक्तिः एव)

उदा - <u>रामाय</u> मधुरं रोचते ।

*अधस्तनचित्रस्य साहाय्येन किं कस्मै रोचते/न रोचते इति लिखत ।*

१. कार्यं ............................................................ ।

२. कार्यं ............................................................ ।

३. पठनम् ............................................................ ।






४. पठनम् ............................................................ ।

५. लेखनम् ............................................................ ।

६. लेखनम् ............................................................ ।

७. पाकः ............................................................ ।

८. पाकः ............................................................ ।

९. रोटिका ............................................................ ।

१०. रोटिका ............................................................ ।

११. चित्रं ............................................................... ।

१२. चित्रं ............................................................... ।

१३. कलहः ............................................................... ।

१४. कलहः ............................................................... ।

१५. वादः ............................................................... ।

१६. वादः ............................................................... ।

**III. नमः** इत्यस्य शब्दस्य योगः यत्र तस्य शब्दस्य चतुर्थी भवति ।

उदा - देवाय नमः ।

(विशेषः - 'नमस्करोमि' इति क्रियापदस्य प्रयोगः कृतः चेत् तु द्वितीया एव । यथा - अहं देवं नमस्करोमि ।)

अभ्यासः - *के कस्मै नमः इति वदन्ति इति निर्दिशत ।*

| | | | | | | |
|---|---|---|---|---|---|---|
| १. रामभक्ताः | रा | मा | य | | | नमः इति वदन्ति । |
| २. शिवभक्ताः | | | | | | नमः " " । |
| ३. दुर्गाभक्ताः | | | | | | नमः " " । |
| ४. देवीभक्ताः | | | | | | नमः " " । |
| ५. आञ्जनेयभक्ताः | | | | | | नमः " " । |
| ६. कृष्णभक्ताः | | | | | | नमः इति वदन्ति । |

**IV.** क्रुध्यति (कुप्यति) असूयति, ईर्ष्यति, द्रुह्यति - इत्येतेषां धातूनां प्रयोगः यत्र क्रियते तत्र क्रोधादीनां पात्रस्य चतुर्थी भवति ।

उदा - रावणः रामाय क्रुध्यति/द्रुह्यति/ईर्ष्यति ..... ।

अभ्यासः - *अधः चत्वारः निर्दिष्टाः सन्ति । कः कं प्रति किं करोति इति बाणचिह्नेन सूचितम् अस्ति । तदाधारेण वाक्यानि रचयत ।*






१. रामः राकेशाय क्रुध्यति ।

२. रामः ................ ................ ................ ।

३. गीता ................ ................ ................ ।

४. गीता ................ ................ ................ ।

५. वाणी ................ ................ ................ ।

६. राकेशः ................ ................ ................ ।

७. राकेशः ................ ................ ................ ।

**V. कल्पते** इत्यस्य योगे चतुर्थी भवति । (कल्पते इत्यर्थे भूधातोः (भवति) प्रयोगः अपि कर्तुं शक्यः ।)

उदा - भक्तिः ज्ञानाय कल्पते/भवति ।
(भक्तिः ज्ञानोत्पादने समर्था भवति इत्यर्थः ।)

अभ्यासः - *आवरणे दत्तस्य पदस्य उचितेन चतुर्थीविभक्त्यन्तरूपेण रिक्तानि स्थलानि पूरयत ।*

यथा - एवं कथनं तस्य ......... भवेत् । (खेदः)
एवं कथनं तस्य खेदाय भवेत् ।

१. एतत् कार्यम् अतीव ..................... भवति । (कष्टम्)

२. प्रतिदिनं प्रातः उत्थानं .................... भवति । (आरोग्यम्)

३. संस्कृतभाषा ......................... भवति । (राष्ट्रैक्यम्)

४. चर्चा ............................... मा भवतु । (विवादः)

५. दुर्व्यसनं कदापि ........................ न भवति । (सुखम्)

६. अद्य तस्य पाठनं .................. अभवत् । (शिरोवेदना)

७. गुरूणां उपदेशस्य श्रवणं .................... भवति (हितम्)

८. एषः उपायः भवतः ............ भवति वा न वा ? (तृप्तिः)

९. दुर्जनस्य धनसम्पादनं .......................... भवति । (मदः)

१०. अप्रियवचनं कस्य वा ....................... भवेत् ? (सन्तोषः)

VI. *कृष्णः एकस्मै किञ्चित् दर्शयति, अन्यस्मै अन्यत् दर्शयति । सः कस्मै किं दर्शयति इति अधः निर्दिष्टम् अस्ति । तदाधारेण सर्वनामशब्दानां चतुर्थीविभक्तिं योजयन्तः वाक्यानि रचयत ।*

| | |
|---|---|
| १. सः – चित्रम् | एषः – पत्रिकाम् |
| २. सा – शाटिका | एषा – कण्ठहारः |
| ३. भवान् – ग्रामः | भवती – नगरम् |
| ४. एते – यक्षगानम् | ते – चलनचित्रम् |
| ५. एताः – नृत्यम् | ताः – नाटकम् |
| ६. भवन्तः – विद्यालयः | भवत्यः – कार्यालयः |
| ७. अहम् – चित्रकथापुस्तकम् | वयम् – क्रीडनकानि |



उदा – १. कृष्णः तस्मै चित्रं दर्शयति, एतस्मै पत्रिकां दर्शयति ।

२. कृष्णः ..... .... दर्शयति ....... ...... दर्शयति ।

३. " ....... ....... " ....... ...... " ।

४. " ....... ....... " ....... ...... " ।

५. " ....... ....... " ....... ...... " ।

६. " ....... ....... " ....... ...... " ।

७. " ....... ...... " ....... ...... " ।

**अधोनिर्दिष्टं कोष्टकं पठत ।**

| | चतुर्थ्यन्तानि रूपाणि | | |
|---|---|---|---|
| | पुं. | स्त्री. | नपुं. |
| इकारान्तः | हरये हरिभ्यः | मत्यै मतिभ्यः | दध्ने दधिभ्यः |
| उकारान्तः | गुरवे गुरुभ्यः | धेनवे धेनुभ्यः | मधुने मधुभ्यः |
| ऋकारान्तः | पित्रे पितृभ्यः | मात्रे मातृभ्यः | ...... ...... |
| ऋकारान्तः | कर्त्रे कर्तृभ्यः | .......... | ..... ...... |

VII. *अधोनिर्दिष्टानां चतुर्थीविभक्तिरूपाणि लिखत ।*

| | *ए.व.* | *ब.व.* |
|---|---|---|
| उदा – शम्भुः | शम्भवे | शम्भुभ्यः |

| | ए.व. | ब.व. |
|---|---|---|
| १. कविः (पुं.) | .............. | .............. |
| २. बन्धुः (पुं.) | .............. | .............. |

३. अवधिः (पुं.) .............. ..............

४. भ्राता (पुं.) .............. ..............

५. वक्ता (पुं.) .............. ..............

६. सुमतिः (स्त्री.) .............. ..............

७. अभिरुचिः (स्त्री.) ............ ..............

८. परशुः (पुं.) .............. ..............

९. याता (स्त्री.) .............. ..............

१०. सूक्तिः (स्त्री) .............. ..............

**VIII.** *आवरणे दत्तानां शब्दानां चतुर्थ्यन्तेन रूपेण (ए.व.) रिक्तस्थलं पूरयत ।*

उदा - मुरारये (मुरारिः) नमः ।

१. ............ (शनिः) नमः ।

२. ............ (राहुः) नमः ।

३. ............ (केतुः) नमः ।

४. ............ (सविता (पुं.)) नमः ।

५. ............ (धेनुः) तृणं रोचते ।

६. ............ (माता) पूजाविधिः रोचते ।

७. ............ (वसुमतिः) नर्तनं रोचते ।

८. ............ (दुहिता (स्त्री.) शिशुपालनं रोचते ।



**IX.** *आवरणे दत्तानां शब्दानां चतुर्थीबहुवचनान्तेन रूपेण रिक्तस्थानानि पूरयत ।*

उदा - प्राध्यापकः वक्तृभ्यः (वक्तृ) गौरवधनं दत्तवान् ।

१. राघवः .................... (अतिथि) स्मरणिकां दत्तवान् ।

२. अर्चकः .................. (सेवाकर्तृ) प्रसादं दत्तवान् ।

३. शिष्यः ............................ (गुरु) पाद्यं दत्तवान् ।

४. पिता .............................. (दुहितृ) धनं दत्तवान् ।

५. राजा ............................ (शत्रु) दण्डनं दत्तवान् ।

६. पुत्राः .................. (मातृ) सुवर्णहारं दत्तवन्तः ।

# पञ्चमी

I. *विभागः यदा भवति तदा यः* ***अवधिभूतः भवति तस्य*** पञ्चमीविभक्तिः *भवति ।*

उदा – वृक्षात् पर्णं पतति ।

(पञ्चम्यर्थे ' ...... तः' इति प्रयोगः सरलः । 'तः' (तस्) इत्येतत् अव्ययम् । अतः सर्वेषु लिङ्गेषु तस्य समानं रूपम् ।)

अभ्यासः – (i) गोविन्दस्य गृहे कश्चन कार्यक्रमः आसीत् । कार्यक्रमार्थं विभिन्नस्थलेभ्यः विभिन्नाः जनाः आगताः । कः कुतः आगतवान् इति अधः निर्दिष्टम् अस्ति । तदाधारेण वाक्यानि रचयत ।

| | | |
|---|---|---|
| मैसूरु | मातुलः | १. मैसूरुतः * मातुलः आगतवान् । |
| काशी | अनुजः | २. ......... ......... ...... । |
| केदार | स्नेहितः | ३. ......... ........ ....... । |
| मद्रास् | भगिनी | ४. ......... ..... .......... । |
| तिरुवनन्तपुर | अग्रजः | ५. ....... ....... .......... । |
| पुणे | भागिनेयः | ६. ........ ....... ......... । |
| कलकत्ता | अनुजा | ७. ........ ....... ......... । |
| कालटि | गुरुः | ८. ........ ....... ......... । |
| ग्रामः | पितामहः | ९. ...... ........ .......... । |
| हैदराबाद | मातामही | १०. ...... ........ ........ । |

* यदि '...... तः' इति प्रयोगं भवन्तः न इच्छन्ति तर्हि विभक्तियोजनसमये मैसूरुनगरात् (.... नगरात्) इत्येवं प्रयोगः सरलः भवति ।)



(ii) *गोविन्दस्य गृहस्य कार्यक्रमार्थं विविधस्थानतः विविधानि वस्तूनि आनीतानि । कस्मात् किम् आनीतम् इति अधः निर्दिष्टम् अस्ति । तदाधारेण वाक्यानि रचयत ।*

| | | |
|---|---|---|
| आपणः | तण्डुलाः | १. आपणतः तण्डुलाः आनीताः । |
| वित्तकोशः | धनम् | २. ......... ....... ........ । |
| विपणिः | शाकाः | ३. ......... ........ ........ । |
| उद्यानम् | आम्रपर्णानि | ४. ........ ........ ......... । |
| मित्रगृहम् | वस्त्रकटाः | ५. ........ ........ ........ । |
| प्रतिवेशिगृहम् | पात्राणि | ६. ......... ........ ....... । |
| शाला | दीर्घपीठानि | ७. ........ ....... ......... । |
| ग्रामः | कदलीपत्राणि | ८. ......... ....... ........ । |
| जलागारम् | जलम् | ९. ....... ....... ......... । |
| क्षीरकेन्द्रम् | क्षीरम् | १०. ....... ....... ......... । |

II. यस्मात् **भीतिः** भवति, तस्य पदस्य पञ्चमीविभक्तिः भवति ।

उदा – व्याघ्रात् जनाः भीताः भवन्ति ।

अभ्यासः – कः कस्मात् भीतः इति अधः निर्दिष्टम् अस्ति । तदाधारेण वाक्यानि रचयत ।

| | | |
|---|---|---|
| रावणः | रामः | १. रावणः रामतः भीतः अस्ति । |
| महाराजः | शत्रुः | २. ........ ....... ......... । |
| चोरः | आरक्षकः | ३. ........ ....... ......... । |
| बालकः | पिशाचः | ४. ........ ....... ......... । |
| सज्जनः | दुर्जनः | ५. ........ ....... ......... । |

| | |
|---|---|
| देवाः | राक्षसाः |
| जनाः | चोराः |
| सर्वे | कष्टानि |
| अजाः | व्याघ्राः |
| वयम् | दुष्टाः |

६. देवाः ....... भीताः सन्ति ।

७. .......... ....... ......... ।

८. .......... ....... ......... ।

९. .......... ....... ......... ।

१०. ........ ....... ....... स्मः ।

III. यदा रक्षणं भवति तदा **यस्मात् रक्षणं** प्राप्यते तस्य पञ्चमीविभक्तिः भवति ।

उदा - देवः अपायात् मां रक्षितवान् ।

अभ्यासः - कः कस्मात् कं रक्षितवान् इति अधः सूचितम् अस्ति । तदाधारेण वाक्यानि रचयत ।

| | | | |
|---|---|---|---|
| विष्णुः | मकरः | गजेन्द्रः | १. विष्णुः मकरतः गजेन्द्रं रक्षितवान् । |
| राजा | शत्रुः | जनाः | २. ........ ........ ......... । |
| रामः | रावणः | सीता | ३. ....... ......... ......... । |
| बालकः | अपायः | भगिनी | ४. ........ ......... ........ । |
| आरक्षकाः | चोराः | जनाः | ५. ........ ......... ........ । |
| देवः | कष्टानि | भक्तः | ६. ........ ......... ........ । |
| इन्द्रः | दानवाः | देवाः | ७. ........ ......... ........ । |
| कृष्णः | कौरवाः | पाण्डवाः | ८. ........ ......... ........ । |

IV. **'बहिः', 'आरभ्य', 'ऋते', 'पूर्वं', 'परः'** इत्येतेषां शब्दानां प्रयोगे पञ्चमीविभक्तिः भवति ।

उदा - १. सः गृहतः [बहिः] गतवान् ।

२. गुरुवासरतः [आरभ्य] मम ज्वरः ।



३. देवात् [ऋते] कः भक्तं रक्षेत् ?

४. सायङ्कालात् [पूर्वं] भवता आगन्तव्यम् ।

५. वैशाखः चैत्रात् [परः] ।

अभ्यासः - आवरणे दत्तानां शब्दानाम् उचितैः पञ्चम्यन्तरूपैः रिक्तस्थलानि पूरयत ।

यथा - ...... (देवालयः) बहिः भक्ताः सन्ति ।
देवालयतः बहिः भक्ताः सन्ति ।

१. किमर्थं जनाः ..... (कार्यालयः) बहिः स्थिताः दृश्यन्ते ?

२. .......... (सप्ताहः) आरभ्य छात्रसङ्ख्या न्यूना अस्ति ।

३. ........... (पठनम्) पूर्वं भवान् उपाहारं स्वीकरोतु ।

४. ............. (उत्थानम्) परं भवती देवं नमस्करोतु ।

५. ....... (आरक्षकः) ऋते दुष्टं निग्रहीतुं कः शक्नुयात् ?

६. ऋते ...... (भवान्), अन्यः कोऽपि एवं न उक्तवान् ।

७. अस्यां क्रीडायां यः ..... (रेखा) बहिः गच्छति सः बाह्यः भवति ।

८. .......... (सूर्योदयः) आरभ्य कृषिकः कार्यं करोति ।

९. भवान् ............ (शयनम्) पूर्वं सकृत् पाठं पठतु ।

१०. मूषकस्य ....... (बिलम्) बहिः मार्जारः स्थितः अस्ति ।

११. उपदेशस्य ............ (श्रवणम्) परं मम खेदः अपगतः ।

१२. ........... (आपणः) बहिः कानिचन वस्तूनि पतितानि सन्ति ।

अधोनिर्दिष्टं कोष्टकं पठत ।

| पञ्चमीविभक्त्यन्तानि रूपाणि | | | |
|---|---|---|---|
| | पुं. | स्त्री. | नपुं. |
| अकारान्तः | बालात् बालेभ्यः | | पुस्तकात् पुस्तकेभ्यः |
| आकारान्तः | | बालायाः बालाभ्यः | |
| इकारान्तः | हरेः हरिभ्यः | मतेः मतिभ्यः | दध्नः दधिभ्यः |
| ईकारान्तः | | गौर्याः गौरीभ्यः | |
| उकारान्तः | गुरोः गुरुभ्यः | धेनोः धेनुभ्यः | मधुनः मधुभ्यः |
| ऋकारान्तः | पितुः पितृभ्यः | मातुः मातृभ्यः | |
| ऋकारान्तः | कर्तुः कर्तृभ्यः | | |

V. अधोनिर्दिष्टानां पञ्चमीविभक्तिरूपाणि लिखत ।

| | | ए.व. | ब.व. |
|---|---|---|---|
| उदा | सेवकः | सेवकात् | सेवकेभ्यः |

| | ए.व. | ब.व. |
|---|---|---|
| १. गृहम् | .............. | .............. |
| २. जलपातः | .............. | .............. |
| ३. अङ्गनी | .............. | .............. |
| ४. तिथिः | .............. | .............. |
| ५. भूमिः | .............. | .............. |
| ६. दुहिता | .............. | .............. |



| | | |
|---|---|---|
| ७. तनुः | .............. | .............. |
| ८. श्रोता | .............. | .............. |
| ९. नटी | .............. | .............. |
| १०. सम्पतिः | .............. | .............. |

VI. आवरणे दत्तानां पदानां पञ्चम्यन्तेन (ए.व.) रूपेण रिक्तस्थलं पूरयत ।

उदा - सः ग्रामात् (ग्रामः) आगतवान् ।

१. इदानीन्तनाः छात्राः ........... (शिक्षकः) भीताः न भवन्ति ।

२. षण्मुखः ............................... (गणपतिः) पूर्वः ।

३. सा ........... (सखी) ऋते अन्यैः सह वार्तालापं न करोति ।

४. सुनीलः ....................... (काशी) आगतवान् अस्ति ।

५. वानरः ............................... (शाखा) पतितवान् ।

६. तस्य पुत्रः ............................... (दुहिता) परः ।

७. ............... (नेता) ऋते कार्यकर्तारः निरुत्साहिनः भवन्ति ।

८. बालाः ............................ (जन्तुः) भीताः भवन्ति ।

९. ................................... (रज्जुः) वस्त्राणि पतन्ति ।

१०. भवान् ............................. (भ्रमः) मुक्तः भवतु ।

VII. आवरणे दत्तानां पदानां पञ्चमीबहुवचनान्तेन रूपेण रिक्तस्थानानि पूरयत ।

१. संस्कारयुक्तशिक्षणं ............ (दुष्टसन्ततिः) समाजं रक्षति ।

२. घनेभ्यः ...................... (दधि) उत्तमं नवनीतं प्राप्नुमः ।

३. ........................ (तृणराशिः) किञ्चित् तृणम् आनय ।

४. ............................ (अहिः) जनाः भीताः ।

५. .................. (पौत्री) ऋते मातामही कार्यक्रमं न गच्छति ।

६. मातरः ..................... (शिशुः) क्षीरकूपीं स्वीकृतवत्यः ।

७. गूढचराः ........................ (महाराजः) भीताः अभवन् ।

८. रामः विभीषणं ...................... (दुष्टभ्राता) रक्षितवान् ।

९. ऋते ...................... (दुहिता) तस्याः अन्यबान्धवाः के ?

१०. कर्मकराः ............... (कार्यालयः) बहिः स्थितवन्तः सन्ति ।



# षष्ठी

I. यत्र सम्बन्धः दृश्यते तत्र सम्बन्धवाचकस्य पदस्य षष्ठी भवति ।

उदा - एषा रामस्य लेखनी ।

अभ्यासः - दिलीपः कश्चन गृहस्थः । तस्य बान्धवाः अधः निर्दिष्टाः सन्ति । दिलीपस्य इतरेषां च सम्बन्धं वाक्यैः निर्दिशत ।




१. दिलीपः गोविन्दस्य अनुजः ।

२. ,, .......... .......... ।

३. ''  ........................  ........................ ।
४. ''  ........................  ........................ ।
५. ''  ........................  ........................ ।
६. ''  ........................  ........................ ।
७. ''  ........................  ........................ ।
८. ''  ........................  ........................ ।
९. ''  ........................  ........................ ।
१०. ''  ........................  ........................ ।

**II.** उचितैः षष्ठ्यन्तरूपैः रिक्तस्थलानि पूरयत ।

यथा – 

| |
|---|
| श्रीकृष्णः (पाण्डवाः) ...... रक्षकः । |
| श्रीकृष्णः पाण्डवानां रक्षकः । |

१. (धनिकाः) .............. गृहाणि उन्नतानि भवन्ति ।
२. (जनाः) .................. रुचिः विभिन्ना भवति ।
३. (बालकाः) ....... कोलाहलेन अध्यापकः कुपितः ।
४. (भवन्तः) ......... व्यवहारं दृष्ट्वा वयं सन्तुष्टाः स्मः ।
५. (वयम्) ............ कार्यालयः सुविशालः अस्ति ।
६. भवतः (कुञ्चिकाः) ........... गुच्छः कुत्र अस्ति ?
७. एषु दिनेषु (वस्तूनि) ............. मूल्यम् अधिकम् ।

**III.** 'पठनम्', 'श्रवणम्', 'गमनम्' इत्यादीनि पदानि भाववाचकानि इति उच्यन्ते । एतादृशानां **भाववाचकपदानां** योगे कर्मपदस्य कर्तृपदस्य च षष्ठीविभक्तिः भवति ।

अभ्यासः – *आवरणे दत्तानां शब्दानाम् उचितैः रूपैः रिक्तस्थलानि पूरयत ।*



उदा – १. रामस्य आगमने विलम्बः नास्ति । (कर्तृपदस्य षष्ठी)
२. पुस्तकस्य अध्ययनेन ज्ञानं वर्धते । (कर्मपदस्य षष्ठी)

यथा – 

| |
|---|
| (गीतं) ...... श्रवणेन अहं सन्तुष्टः । |
| गीतस्य श्रवणेन अहं सन्तुष्टः । |

१. (योग्यः) ............. (आहारः) .................. सेवनेन शक्तिः वर्धते ।
२. (ग्रन्थाः) ............... अध्ययनम् एव (सरस्वती) .......... आराधनम् ।
३. सः (विषयः) .................. प्रतिपादनं सम्यक् कृतवान् ।
४. अद्य प्रातःकाले (कार्यक्रमः) ................. उद्घाटनं जातम् ।
५. भवान् शीघ्रं (पुस्तकम्) ................ अन्वेषणं करोतु ।
६. (वस्त्रादीनि) ......................... दानेन पुण्यं लभ्यते ।
७. पण्डितः सदा (ग्रन्थाः) ................. परिशीलनं करोति ।
८. कर्मकरी (पात्राणि) .............. प्रक्षालनं कृत्वा गृहं गच्छति ।
९. कर्णः निर्धनाय (कवचं) ............. (कुण्डलं) .......... च दानं कृतवान् ।
१०. अहं (मूल्याङ्काः) ............ (नाणकानि) ................ सङ्ग्रहं करोमि ।

**IV.**



*उमेशस्य दिनचर्यायाः कानिचन कार्याणि पूर्वं चित्ररूपेण निर्दिष्टानि । एतत् चित्रं दृष्ट्वा कस्य अनन्तरं किं कृतं/किं जातम् इति वाक्यैः लिखत ।*

१. देवस्य नमस्कारस्य अनन्तरं विद्युत् गता ।

२. .......... ......... अनन्तरं जनकः आहूतवान् ।

३. ......... ...... अनन्तरम् उमेशः पठितवान् ।

४. ......... ...... अनन्तरं कोलाहलः श्रुतः ।

५. ......... ...... अनन्तरं दूरवाणी आगता ।

६. ........ ...... अनन्तरम् उमेशः पानीयं पीतवान् ।

७. ........ ...... अनन्तरम् उमेशः गणनां परिशीलितवान् ।

८. ........ ...... अनन्तरम् उमेशः द्वारं पिहितवान् ।

९. ........ ...... अनन्तरम् उमेशः यानम् आरूढवान् ।

१०. ...... ....... अनन्तरम् उमेशः वस्तूनि क्रीतवान् ।

**V.** *अभ्यासः - सुनीलः यानि कार्याणि कृतवान् तेषाम् आवली अधः अस्ति । तदाधारेण सः कस्मात् पूर्वं किं कृतवान् इति निर्दिशत ।*

सुनीलः - आपणं गतवान् ⟶ वस्तूनि क्रीतवान् ⟶
मित्राणि दृष्टवान् ⟶ सस्यानि आरोपितवान् ⟶
वस्त्राणि क्षालितवान् ⟶ पत्राणि लिखितवान् ⟶
पत्रिकाः पठितवान् ⟶ बालान् पाठितवान् ⟶
फलानि खादितवान् ⟶ श्लोकान् कण्ठस्थीकृतवान् ⟶
देवान् स्मृतवान् ।

१. देवानां स्मरणतः पूर्वं सुनीलः श्लोकान् कण्ठस्थीकृतवान् ।



२. ............ कण्ठस्थीकरणतः पूर्वं सुनीलः फलानि खादितवान् ।

३. .............. खादनतः पूर्वं सुनीलः बालान् पाठितवान् ।

४. ........... पाठनतः पूर्वं सुनीलः पत्रिकाः पठितवान् ।

५. ........... पठनतः पूर्वं सुनीलः पत्राणि लिखितवान् ।

६. .............. लेखनतः पूर्वं सुनीलः वस्त्राणि क्षालितवान् ।

७. ............ क्षालनतः पूर्वं सुनीलः सस्यानि आरोपितवान् ।

८. ............... आरोपणतः पूर्वं सुनीलः मित्राणि दृष्टवान् ।

९. .............. दर्शनतः पूर्वं सुनीलः वस्तूनि क्रीतवान् ।

१०. ................ क्रयणतः पूर्वं सुनीलः आपणं गतवान् ।

**VI.** *अध्यापकः कस्य/कस्याः/केषां/कासां प्रतिभां दृष्टवान्/ न दृष्टवान् इति अधः निर्दिष्टम् अस्ति । तदाधारेण वाक्यानि रचयत ।*

| | ✓ | ✗ |
|---|---|---|
| १. | सः | एषः |
| २. | सा | एषा |
| ३. | भवान् | भवती |
| ४. | एताः | एते |
| ५. | ते | ताः |
| ६. | अहम् | वयम् |
| ७. | भवत्यः | भवन्तः |

| उदा - | १. अध्यापकः [तस्य] प्रतिभां दृष्टवान् । [एतस्य] प्रतिभां न दृष्टवान् । |
|---|---|

२. अध्यापकः ........ प्रतिभां दृष्टवान् । ....... प्रतिभां न दृष्टवान् ।

३. अध्यापकः ......... प्रतिभां दृष्टवान् । ...... प्रतिभां न दृष्टवान् ।

४. अध्यापकः ........ प्रतिभां दृष्टवान् । ....... प्रतिभां न दृष्टवान् ।

५. अध्यापकः ........ प्रतिभां दृष्टवान् । ....... प्रतिभां न दृष्टवान् ।

६. अध्यापकः ........ प्रतिभां दृष्टवान् । ....... प्रतिभां न दृष्टवान् ।

७. अध्यापकः ........ प्रतिभां दृष्टवान् । ....... प्रतिभां न दृष्टवान् ।

## अधोनिर्दिष्टं कोष्टकं पठत ।

| षष्ठीविभक्त्यन्तानि रूपाणि | | | |
|---|---|---|---|
| | पुं. | स्त्री. | नपुं. |
| इकारान्तः | हरेः हरीणाम् | मतेः मतीनाम् | दध्नः दध्नाम् |
| उकारान्तः | गुरोः गुरूणाम् | धेनोः धेनूनाम् | मधुनः मधूनाम् |
| ऋकारान्तः | पितुः पितॄणाम् | मातुः मातॄणाम् | |
| ऋकारान्तः | कर्तुः कर्तॄणाम् | | |



**VII.** *अधोनिर्दिष्टानां षष्ठीविभक्तिरूपाणि लिखत ।*

| | | ए.व. | ब.व. |
|---|---|---|---|
| उदा | कविः | कवेः | कवीनाम् |

| | ए.व. | ब.व. |
|---|---|---|
| १. धृतिः (स्त्री) | .............. | .............. |
| २. तरुः (पुं) | .............. | .............. |
| ३. दाता (पुं) | .............. | .............. |
| ४. दुहिता (स्त्री) | .............. | .............. |
| ५. रज्जुः (स्त्री) | .............. | .............. |
| ६. अवधिः (पुं) | .............. | .............. |
| ७. शलाटुः (पुं) | .............. | .............. |
| ८. प्रशस्तिः (स्त्री) | .............. | .............. |
| ९. निघण्टुः (पुं) | .............. | .............. |
| १०. भ्राता (पुं) | .............. | .............. |

**VIII.** आवरणे दत्तानां पदानां षष्ठ्यन्तेन (ए.व.) रूपेण रिक्तस्थलं पूरयत ।

उदा - <u>मुनेः</u> (मुनिः) आश्रमः श्रीरङ्गपुरे अस्ति ।

१. ................................ (रघुः) पिता आगतः ।

२. ................................ (वक्ता) सम्माननं कृतम् ।

३. ............................ (याता) सहोदरः पलायितः ।

४. .............................. (मधु) माधुर्यम् अवर्णनीयम् ।

५. .............................. (प्रकृतिः) आराधकाः भवेम ।

६. .................................. (कविः) परिचयः कृतः ।

७. .............................. (रज्जुः) दैर्घ्यं भवान् जानातु ।

८. ............................ (रूढिः) उल्लङ्घनं खेदाय भवेत् ।

९. ................................. (जन्तुः) नाशः करणीयः ।

१०. ..................... (अभिरुचिः) अवगमनम् आवश्यकम् ।

**IX.** *आवरणे दत्तानां पदानां षष्ठीबहुवचनान्तेन रूपेण रिक्तस्थानानि पूरयत ।*

उदा - सः <u>राशीनां</u> (राशिः) गणनां कृतवान् ।

१. नलिनी ...................... (प्रतिकृतिः) वितरणं कृतवती ।

२. ........................... (छदिः) उपरि शुष्ककाष्ठानि सन्ति ।

३. आश्रमे ................ (पलाण्डुः) उपयोगः निषिद्धः अस्ति ।

४. ......................... (पशुः) रक्षणम् अस्माकं कर्तव्यमस्ति ।

५. ...................... (माता) मेलनं मङ्गलूरुनगरे प्राचलत् ।

६. ...................... (कार्यकर्ता) आवश्यकता अधिका वर्तते ।

७. ............ (शिशुः) मुग्धवचनेभ्यः मातरः सन्तुष्टाः जाताः ।

८. .................... (दाता) आवलिं गणेशः सज्जीकृतवान् ।



# सप्तमी

सर्वेषामपि वस्तूनां कोऽपि आधारः भवति एव । एवं यः **आधारः** भवति तस्य सम्तमीविभक्तिः भवति ।

उदा - मम <u>गृहे</u> एकः शुनकः अस्ति ।

**I.** अभ्यासः - अधः सूचितान् आधारभूतान् शब्दान् आश्रित्य वाक्यानि रचयत ।

| बेङ्गलूरुनगरम् - जयनगरम् - उद्यानम् - सस्यम् - फलम् - बीजानि |
|---|

१. बेङ्गलूरुनगरे जयनगरम् अस्ति ।

२. .......... ............ उद्यानम् अस्ति ।

३. .......... ............ ............ ।

४. .......... ............ ............ ।

५. .......... ............ ............ ।

| विद्यालयः - प्रकोष्ठः - ग्रन्थालयः - ग्रन्थः - नीतिविषयाः |
|---|

६. ....... ......... ...... प्रकोष्ठः अस्ति ।

७. ....... ........ ...... अस्ति ।

८. ........ ........ ............ ।

९. ........ ......... ......... सन्ति ।

| पाठशाला - वाटिका - लता - शाखा - पिपीलिका |
|---|

१०. ......... ......... वाटिका अस्ति ।

११. .......... ............ .......... अस्ति ।

१२. .............. ........... ..........,.. ।

१३. ............ ............. ............ ।

| नगरी - विपणिः - वीथी - प्रदर्शिनी - अधिकारिणी |
|---|

१४. .......... ......... ........ विपणिः अस्ति ।

१५. ............... ............ ......... अस्ति ।

१६. .............. ............. ............. ।

१७. ............... ............. ............ ।

II. 'संस्कृताध्ययने मम महती आसक्तिः अस्ति' इति वाक्ये आसक्तेः आधारः 'संस्कृताध्ययनम्' । एषः अस्ति **विषयरूपः** आधारः । एतादृशस्य आधारस्य अपि सप्तमी भवति ।

अभ्यासः - *आवरणे दत्तानां शब्दानाम् उचितैः रूपैः रिक्तस्थलानि पूरयत ।*

यथा -

| (सः) ....... भवतः अनादरः मास्तु । |
|---|
| तस्मिन् भवतः अनादरः मास्तु । |

१. (संस्कृतम्) ............... जनाः प्रीतिं प्रदर्शयन्ति ।

२. शरीरस्य (अलङ्कारः) ......... मम अभिरुचिः नास्ति ।

३. (मधुरखाद्यम्) .......... एतावती प्रीतिः किमर्थम् ?

४. देवः (भक्तः) .................. कृपां प्रदर्शयति ।

५. (चित्रलेखनम्) ........ बालकस्य अतीव आसक्तिः ।



III. **'स्निह्यति' 'विश्वसिति'** इत्येतयोः धात्वोः प्रयोगः यत्र भवति तत्र स्नेहस्य विश्वासस्य च यत् पात्रं तस्य सप्तमीविभक्तिः भवति ।

उदा - माता पुत्रे विशेषतः स्निह्यति ।

अभ्यासः - आवरणे दत्तानां शब्दानाम् उचितैः रूपैः रिक्तस्थलानि पूरयत ।

१. सः वञ्चकः । अतः (सः) .................. मा विश्वसितु ।

२. ये (जनाः) ................ स्नेहं प्रदर्शयन्ति (ते) ............. जनाः स्निह्यन्ति ।

३. रावणः (स्वशक्तिः) ................ अधिकं विश्वसितवान् ।

४. (यानम्) .................... विश्वस्य गतः अहं मूर्खः सञ्जातः ।

५. भवतः (वचनानि) ............... विश्वस्य अहम् अग्रे गतवान् ।

६. दशरथः (पुत्राः) ..................... अधिकं स्निह्यति स्म ।

७. यः (दुर्जनाः) ............... स्निह्यति सः अवश्यं हानिं प्राप्नोति ।

८. (राजनीतिजनाः) ............... भवन्तः कदापि मा विश्वसन्तु ।

IV. 'इन्द्रजित् मायासीतां केशेषु गृहीतवान्' इत्येतस्मिन् वाक्ये ग्रहणक्रियायाः कर्म सीता । कर्मभूतायाः सीतायाः अङ्गे केशे इन्द्रजित् गृहीतवान् । एवं कर्मणः **यस्मिन् अङ्गे ग्रहणं, ताडनं** (प्रहरणम्) इत्यादिकं भवति, तस्य अङ्गस्य सप्तमी भवती ।

अभ्यासः - अधः कर्तृपदं, कर्मपदं, कर्मणः अङ्गं, क्रिया च क्रमेण निर्दिष्टानि सन्ति । तेषां साहाय्येन पूर्णानि वाक्यानि रचयत ।

यथा -

| सः - अहं - वक्षःस्थलं - प्रहृतवान् । |
|---|
| सः मां वक्षःस्थले प्रहृतवान् । |

१. आरक्षकः - चोरः - कण्ठः - गृहीतवान् ।

............ .......... ......... ........... ।

२. राक्षसी - सीता - केशाः - गृहीतवती ।

............ ........... ............ ........... ।

३. बालकः - अन्यबालकः - कपोलः - ताडितवान् ।

............ .............. ......... ........... ।

४. माता - पुत्रः (प्रीत्या) - मस्तकं - ताडितवती ।

............. ............ .......... ........... ।

५. मल्लः - अन्यमल्लः - उदरं - ताडितवान् ।

........... ............. ........... ........... ।

६. योधः - शत्रुः - कण्ठः - प्रहृतवान् ।

............. ............ .......... ........... ।

V. एतं पदबन्धं सप्तमीविभक्तिरूपैः पूरयत ।

१. सचित्राः बालकथाः अस्यां पत्रिकायां भवन्ति ।
२. पुष्पाणि कुत्र विकसन्ति ?
३. धनम् अत्र स्थापयन्ति जनाः ।
४. अमूल्यानि लेखनानि अत्र सङ्गृह्णामि ।
५. वृक्षाः कदा पल्लविताः भवन्ति ?
६. गुरुराघवेन्द्रः कुत्र वसति ?
७. सः रात्रौ न खादति । तर्हि कदा ?
८. नागरिकाः अत्र वासं कुर्वन्ति ।
९. दशावतारकथाः कुत्र सन्ति ?
१०. राजा कुत्र विश्वसिति ?
११. अत्र मूल्याङ्कः लभ्यते ।
१२. प्राणाः एतेषु सन्ति ।
१३. वार्ताः कासु मुद्रिताः भवन्ति ?
१४. शकुन्तलायाः प्रीतिः कस्मिन् ?






VI. नारायणः कश्चन सरलः जनः । सः विविधेषु जनेषु विविधान् भावान् प्रदर्शयति । भावपात्राणि प्रथमादिक्रमेण सङ्ख्यया निर्दिष्टानि । तेषां सप्तम्यन्तरूपैः अधस्तनवाक्यानि पूरयत ।

| | | | | |
|---|---|---|---|---|
| १. सः | २. एषः | ३. सा | ४. एषा | ५. भवान् |
| ६. भवती | ७. अहम् | ८. ते | ९. एते | १०. भवन्तः |
| ११. ताः | १२. भवत्यः | १३. एताः | १४. वयम् | |

उदा - १. नारायणः तस्मिन् आदरं प्रदर्शयति ।

२. नारायणः ................ प्रीतिं प्रदर्शयति ।
३. ,, .............. आसक्तिं ,, ।
४. ,, ....................विनयं ,, ।
५. ,, ................ वात्सल्यं ,, ।
६. ,, .................... मैत्रीं ,, ।
७. ,, .................. श्रद्धां ,, ।
८. ,, ................... स्नेहं ,, ।
९. ,, ................... नम्रतां ,, ।
१०. ,, .................... प्रेम ,, ।
११. ,, .................. गौरवम् ,, ।
१२. ,, ................ विधेयतां ,, ।
१३. ,, .................. भक्तिं ,, ।
१४. ,, ............... विशेषादरं ,, ।

## अधोनिर्दिष्टं कोष्टकं पठत ।

| सप्तमीविभक्त्यन्तानि रूपाणि | | | |
|---|---|---|---|
| | पुं. | स्त्री. | नपुं. |
| इकारान्तः | हरौ हरिषु | मत्यां/मतौ मतिषु | दध्नि दधिषु |
| उकारान्तः | गुरौ गुरुषु | धेन्वां /धेनौ धेनुषु | मधुनि मधुषु |
| ऋकारान्तः | पितरि पितृषु | मातरि मातृषु | |
| ऋकारान्तः | कर्तरि कर्तृषु | | |

**VII.** अधोनिर्दिष्टानां सप्तमीविभक्तिरूपाणि लिखत ।

| | | ए.व. | ब.व. |
|---|---|---|---|
| उदा | प्रवृत्तिः | प्रवृत्तौ | प्रवृत्तिषु |

ए.व. ब.व.

१. नाभिः (पुं) .............. ..............

२. भीरुः (पुं) .............. ..............

३. रज्जुः (स्त्री) .............. ..............

४. सन्ततिः (स्त्री).............. ..............

५. माता (स्त्री) .............. ..............

६. श्रोता (पुं) .............. ..............

७. कार्यकर्ता (पुं).............. ..............

८. गुणाणुः (पुं) .............. ..............

९. वायुः (पुं) .............. ..............

१०. संस्कृतिः (स्त्री) .............. ............



**VIII.** आवरणे दत्तानां शब्दानां सप्तम्यन्तेन रूपेण (ए.व.) रिक्तस्थलं पूरयत ।

उदा - भक्तस्य <u>साधौ</u> (साधुः) विश्वासः आसीत् ।

१. लक्ष्मणस्य ................ (भ्राता) अतीव आदरः आसीत् ।

२. शबर्याः .............. (दाशरथिः) अतीव आदरः आसीत् ।

३. श्रवणकुमारस्य ............. (पिता) अतीव आदरः आसीत् ।

४. भीष्मस्य .................. (माता) अतीव आदरः आसीत् ।

५. एकलव्यस्य ................ (गुरुः) अतीव आदरः आसीत् ।

६. जनकस्य .................. (दुहिता) अतीव प्रीतिः आसीत् ।

७. विवेकानन्दस्य ........ (भारतीयसंस्कृतिः) अतीव प्रीतिः आसीत् ।

८. दिलीपस्य .................... (धेनुः) अतीव प्रीतिः आसीत् ।

**IX.** *आवरणे दत्तानां शब्दानां सप्तमीबहुवचनान्तेन रूपेण रिक्तस्थलानि पूरयत ।*

उदा - <u>हिन्दुषु</u> (हिन्दु) ऐक्यं भवेत् ।

१. ................................ (शिशु) मुग्धता भवेत् ।

२. ............................ (मुनि) इन्द्रियनिग्रहः भवेत् ।

३. ................................ (भ्रातृ) सहमतः भवेत् ।

४. ................................ (नेतृ) दूरदृष्टिः भवेत् ।

५. ................................ (स्नायु) शक्तिः भवेत् ।

६. .................................. (दधि) रुचिः भवेत् ।

७. ............................ (विपणि) स्वच्छता भवेत् ।

८. .................................. (यातृ) स्नेहः भवेत् ।

# सम्बोधनम्

रामः, गोविन्दः, गौरी, लता इत्यादीनां सर्वेषां शब्दानां सम्बोधन-रूपाणि एकवचने प्रथमाविभक्तितः भिन्नानि भवन्ति । (द्विवचने बहुवचने च प्रथमाविभक्तिरूपाणि एव सम्बोधनरूपाणि अपि ।) सम्बोधनसमये हे, भोः, अये, अयि, रे इत्यादीनि अव्ययानि अपि कदाचित् उपयुज्यन्ते । अधः सम्बोधनरूपाणि, प्रथमाविभक्तिरूपतः कः भेदः इति च निर्दिष्टम् अस्ति ।

| प्र.वि. | सम्बोधनरूपम् | प्रथमाविभक्तितः भेदः |
|---|---|---|
| रामः | राम ! | सम्बोधने विसर्गः न दृश्यते । |
| गोविन्दः | गोविन्द ! | सम्बोधने विसर्गः न दृश्यते । |
| मित्रम् | मित्र ! | सम्बोधने मकारः न दृश्यते । |
| सीता | सीते ! | सम्बोधने अन्ते 'ए'कारः । (प्रथमायां तु 'आ'कारः ।) |
| मान्या | मान्ये ! | ,, |
| गौरी | गौरि | सम्बोधने ईकारस्य ह्रस्वः । |
| भगिनी | भगिनि ! | ,, |
| लक्ष्मीः | लक्ष्मि ! | ,, (विसर्गस्य अश्रवणं च ।) |
| अम्बा | अम्ब ! | सम्बोधने ह्रस्वः 'अ'कारः । |

| | | |
|---|---|---|
| हरिः | हरे ! | सम्बोधने इकारस्य स्थाने एकारः |
| सुमतिः | सुमते ! | ,, ,, ,, ,, |
| गुरुः | गुरो ! | ,, उकारस्य ,, ओकारः |
| धेनुः | धेनो | ,, ,, ,, ,, |
| पिता | पितः | ,, ह्रस्वः अकारः विसर्गः च |
| कर्ता | कर्तः | ,, ,, ,, ,, |
| माता | मातः | ,, ,, ,, ,, |



अभ्यासः - आवरणे दत्तानां शब्दानाम् उचितैः रूपैः रिक्तस्थलानि पूरयत ।

यथा - ......... ! भवान् कुत्र गच्छति ? (गोविन्दः)
गोविन्द ! भवान् कुत्र गच्छति ?

१. ......................... ! भवान् सेवकम् आह्वयतु । (कृष्णः)

२. ......................... ! अत्र आगच्छतु तावत् । (भगिनी)

३. ............ ! पठनम् अस्ति इति स्मरति खलु भवती ? (राधा)

४. .................... ! श्वः मम गृहम् आगच्छतु भोः । (मित्रम्)

५. ........... ! अद्य सायं मम आगमने विलम्बः भवेत् । (अम्बा)

६. ...................... ! चिन्तां मा करोतु भवती । (मालिनी)

७. .................... ! किमहम् अन्तः आगच्छानि ? (आर्या)

८. .................... ! भवती एतस्य अर्थं पुनः वदतु । (मान्या)

९. ............... ! किमर्थम् अद्य आगमने विलम्बः ? (लक्ष्मीः)

१०. .................... ! भवती किमर्थं मौनेन स्थितवती ? (सीता)

११. .................... ! शालायां कोलाहलं मा करोतु । (रविः)

१२. ............................ ! प्रवासार्थं धनं ददातु । (पिता)

१३. ........... ! शीघ्रम् आगच्छ । अन्धकारः भविष्यति । (धेनु)

१४. ............... ! भवती मह्यम् अद्य किं मधुरं ददाति ? (माता)

१५. ............... ! भवान् यत् गीतमिच्छति तत् गायामि । (श्रोता)

१६. ......................... ! रक्ष मां भवसागरात् । (शम्भुः)

# मिश्राभ्यासः

I. 'अ' विभागस्य विभक्तिरूपस्य अनुगुणम् 'आ' विभागतः वाक्यखण्डम् अन्विष्य योजयत ।

(i)

| अ | आ |
|---|---|
| १. ग्रन्थं | १. उभयतः वृक्षाः सन्ति । |
| २. गृहम् | २. पत्रिकां कर्तयति सः । |
| ३. मार्गम् | ३. सा शयनं कृतवती । |
| ४. छात्रम् | ४. परितः उद्यानम् अस्ति । |
| ५. कर्तर्या | ५. प्रश्नं पृच्छति अध्यापकः । |
| ६. तृप्ता | ६. एषः प्रतिदिनं विद्यालयं गच्छति । |
| ७. मित्रेण | ७. अहम् एकां लेखनीं क्रीतवान् । |
| ८. द्विचक्रिकया | ८. पठितुं सः ग्रन्थालयं गतवान् । |
| ९. दशरूप्यकैः | ९. व्यर्थविवादेन । |
| १०. अलम् | १०. सह सः आपणं गतवान् । |
| | ११. भीतः सः पलायनं कृतवान् । |

(ii)

| अ | आ |
|---|---|
| १. कर्मकराय | १. सह एषः सर्वत्र अटति । |
| २. मह्यम् | २. गृहीत्वा एषः तं ताडितवान् । |
| ३. देवाय श्रीकृष्णाय | ३. अहं दश रूप्यकाणि दत्तवान् । |
| ४. सन्तोषाय | ४. आगतः अस्ति मम मातुलः । |
| ५. मैसूरुतः | ५. अनन्तरम् अहं निद्रां करोमि । |
| ६. सिंहात् | ६. व्याकरणं नितरां रोचते । |
| ७. दिलीपस्य | ७. विश्वासः मास्तु भवतः । |
| ८. अध्ययनस्य | ८. मातुलः ग्रामे निवसति । |
| ९. तस्मिन् | ९. भीतः भवति हरिणः । |
| १०. केशेषु | १०. कल्पते एषा वार्ता । |
| | ११. नमः । |



II. युक्तं रूपं चित्वा रिक्ते स्थले लिखत ।

१. लता अद्य .................................... गतवती ।
(कार्यालयः/विद्यालयम्/देवालये)

२. महिला ................ आनयति । (लेखन्यः/अङ्कनीः/स्यूताः)

३. अस्माकं ......................... परितः क्रीडाङ्गणम् अस्ति ।
(शालायाः/शालाम्/शालायाम्)

४. .................................... उभयतः छात्राः सन्ति ।
(अध्यापकम्/अध्यापकस्य/अध्यापकात्)

५. याचकः ........................ धनं प्रार्थयते ।
(धानिकाय/धनिकात्/धनिकम्)

६. एषा ............................... सह विपणिं गतवती ।
(भगिनीम्/भगिन्या/भगिन्याः)

७. सः ............ विना कार्यालयं गतवान् । (घटिः/घटीम्/घट्यै)

८. अनन्तः .................................... पत्रं लिखति ।
(लेखनिया/लेखनीतः/लेखन्या)

९. राधा .................. पत्रं लिखति । (सख्यै/अग्रजेन/अनुजम्)

१०. एतानि पुस्तकानि ................................ ददातु ।
(बालिकान्/बालिकाभ्यः/बालिकेभ्यः)

११. ............... नमः इति भक्ताः वदन्ति । (देव्यै/देवीम्/देवायै)

१२. प्रातः उत्थाय अहं .............. नमामि । (देवाय/देवम्/देवायै)

१३. दिनेशः ............... क्रुध्यति । (भगिन्यै/भगिन्याम्/भगिन्याः)

१४. वयं ................ भीताः स्मः । (दुर्जनैः/दुर्जनेभ्यः/दुर्जनानाम्)

१५. श्रीकृष्णः द्रौपदीं ............................. रक्षितवान् ।
(कौरवेभ्यः/कौरवैः/कौरवान्)

१६. मित्र ! ...................... ऋते अन्यं कं शरणं गच्छामि ?
(भवतः/भवता/भवते)

१७. ........................ समाप्तेः अनन्तरम् अहम् आगतः ।
(कार्यक्रमम्/कार्यक्रमे/कार्यक्रमस्य)

१८. .................................... भोजनवस्तूनि सन्ति ।
(पाकशाले/पाकशालायां/पाकशालायाः)

१९. भोः, सः मिथ्यावादी । अतः ................ मा विश्वसितु ।
(तम्/तस्मिन्/तस्मै)

२०. भीमः बकासुरं ................ प्रहृतवान् । (उदरे/उदरम्/उदराय)

२१. ............... महती बुभुक्षा खलु मम ! (अम्बा/अम्बे/अम्ब)

२२. .............................. ! एकां कथां कथयतु तावत् !
(भगिनी/भगिनि/भगिने)

२३. .............................. ! मा गच्छतु तत्र !
(अरविन्दः/अरविन्द/अरविन्दा)

२४. जनाः ........................... सञ्चारं कुर्वन्ति ।
(लोकयानैः/लोकयानेषु/लोकयानात्)

२५. रुक्मिणी ................. असूयति । (राधाम्/राधायै/राधायाः)

**III.** अधः दत्तेषु वाक्येषु प्रतिवाक्यम् एकः विभक्तिदोषः अस्ति । दोषयुक्तं शब्दं रेखया अङ्कयित्वा, वाक्यस्य अन्ते आवरणे शुद्धं शब्दरूपं लिखत ।

यथा –

| |
|---|
| माता पुत्रीन् आह्वयति । (...........) |
| माता <u>पुत्रीन्</u> आह्वयति । (पुत्रीः) |

१. अहम् अद्य लेखन्यः आनीतवती । (..........................)



२. पाचकः छुरिकायाः शाकानि कर्तयति । (.......................)

३. श्रीकृष्णः चक्रात् जरासन्धं मारितवान् । (.......................)

४. पिता पुत्रियाय धनस्यूतं दत्तवान् । (............................)

५. किमर्थं भवान् तं विश्वसितवान् ? (............................)

६. दन्तानां विना चर्वणं न शक्यते । (............................)

७. भवतः सह कः आगतवान् ? (...............................)

८. सर्पेण भीतः सः पलायितवान् । (............................)

९. छात्राः ! कोलाहलः अलम् । (................................)

१०. किमर्थं छात्राः अध्यापकस्य परितः स्थिताः सन्ति ? (...........)

११. एतत् युतकं भवान् कतिरूप्यकेषु क्रीतवान् ? (.................)

१२. निःस्थानतः अहं त्रिचक्रिकायाम् आगतवान् । (.................)

१३. अयि लक्ष्मीः ! भक्तानां प्रिया खलु भवती । (.................)

१४. कस्य वा रोचते एषः कार्यक्रमः ? (............................)

१५. मयि क्रुध्यति चेत् कः लाभः भवतः ? (.......................)

१६. जवहरलालनेहरू बालेभ्यः बहु स्निह्यति स्म । (.................)

१७. आत्मीयान् विश्वस्य सः हानिं प्राप्तवान् । (.......................)

१८. एतेन किं भीतः वा भवान् ? (................................)

१९. कार्यक्रमं समाप्त्यनन्तरम् सर्वे उत्थितवन्तः । (..................)

२०. ह्यः अहं अपघातेन रक्षितः अभवम् । (........................)

**IV.** युक्तं रूपं चित्वा रिक्ते स्थले लिखत ।

१. अस्मिन् ग्रन्थे .......... आवलिः गणशः सङ्गृहीतः अस्ति ।
(धातूनाम्, धातुभ्यः, धातुषु)

२. जनाः .............. सम्मानयन्ति । (कविभिः, कवीनाम्, कवीन्)

३. तस्मिन् नगरे शास्त्रीयसङ्गीतस्य ........... सङ्ख्या अधिका वर्तते ।
(श्रोतारः, श्रोतृणाम्, श्रोतृषु)

४. तिरुवनन्तपुरे ........................ यानपेटिकाः प्रदत्ताः ।
(कार्यकर्तृभ्यः, कार्यकर्तॄन्, कार्यकर्तृणाम्)

५. बालानाम् ............................ पोषणं करणीयम् ।
(अभिरुचिम्, अभिरुचेः, अभिरुच्यै)

६. ललिते ! वार्षिकोत्सवार्थं भवती ............ अपि आनयतु ।
(मातारि, मात्रा, मातरम्)

७. पाठस्य आरम्भे ......................... लिखिता अस्ति ।
(सूक्तिः, सूक्तिम्, सूक्तौ)

८. 'विना' शब्देन सह कस्याः .................. प्रयोगः क्रियते ?
(विभक्तिम्, विभक्तेन, विभक्तेः)

९. पृथुकं ............. सह योजयित्वा खाद । (दध्नि, दध्ने, दध्ना)

१०. वाली सुग्रीवं ................................. ताडितवान् ।
(बाहुभिः, बाहुभ्याम्, बाहुभ्यः)

११. ..................................... जनाः भीताः भवन्ति ।
(क्रूरपशुभिः, क्रूरपशुभ्यः, क्रूरपशुषु)

१२. वञ्चकेषु ......................... विश्वासः न करणीयः ।
(जनानाम्, जनेभ्यः, जनेषु)

१३. राजा जनान् ...................................... रक्षति ।
(विपत्तिषु, विपत्तिभ्यः, विपत्तिभिः)

१४. वस्त्रप्रसारणार्थं बहिः ......................... बद्धाः सन्ति ।
(रज्जूः, रज्जून्, रज्जवः)

१५. हे .......................... ! रक्ष माम् । (हरि, हरो, हरे)



# परिशिष्टम्

## विभक्त्यर्थाः (व्यवहारोपयोगिमात्रम्)

| | | |
|---|---|---|
| प्रथमा - | - कर्तरिप्रयोगे कर्तुः प्र. वि. भवति । | - बालः श्लोकं पठति । |
| | - कर्मणिप्रयोगे कर्मणः प्र.वि भति । | - बालेन श्लोकः पठ्यते । |
| द्वितीया - | - कर्तरिप्रयोगे कर्मणः द्वि.वि. भवति । | - वानरः वृक्षम् आरोहति । |
| | - सकर्मकधातूनां प्रयोगे (कर्तरि, कर्मणि च प्रयोगे) क्त्वान्तात् ल्यबन्तात् पूर्वं द्वितीयाविभक्तिः भवति । | - बालः पत्रं पठित्वा क्रीड्यते ।<br>- बालेन पत्रं पठित्वा क्रीड्यते ।<br>- बालकः तण्डुलम् आनीय पचति । |
| | - सकर्मकधातूनां प्रयोगे (कर्तारि, कर्मणि च प्रयोगे) तुमुन्नन्तात्, शत्रन्तात्, च पूर्वं द्वितीयविभक्तिः भवतिः । | - सः उयन्यासं श्रोतुं गच्छति ।<br>- तेन उपन्यासं श्रोतुं गम्यते ।<br>- एषः मार्गं पश्यता भवति ।<br>- एतेन मार्गं पश्यता भूयते । |
| | - 'परितः' शब्दात् पूर्वं द्वि.वि. भवति । | - शालां परितः उद्यानम् अस्ति । |
| | - विना' प्रयोगे द्वि . वि भवति । | - वायुं विना कोऽपि न जीवति । (तृतीया, पञ्चमी अपि भवति ।) |
| | - 'उभयतः' प्रयोगे " " | - मार्गम् उभयतः वृक्षाः सन्ति । |
| | - द्विकर्मकधातूनां प्रयोगे कर्मणोः द्वि. वि. भवति । (कर्तरि प्रयोगे) | - गुरुः शिष्यं प्रश्नं पृच्छति । |
| तृतीया - | - करणे तृतीयाविभक्तिः भवति । | - सीता लेखन्या लिखति । |
| | - भावेप्रयोगे कर्मणिप्रयोगे च कर्तुः पृतीयाविभक्तिः भवति । | - पुष्पेण विकस्यते ।<br>- लेखकेन ग्रन्थाः लिख्यन्ते । |
| | - सह-प्रयोगे तृ. वि. भवति । | - अहं मित्रेण सह गच्छामि । |
| | - सदृशः-प्रयोगे तृ. वि. भवति । | - मुखं चन्द्रेण सदृशम् अस्ति । (षष्ठी अपि) |
| | - कारणवाचकस्य तृ.वि. भवति । | - विद्यया ज्ञानं वर्धते । (पञ्चमी अपि भवति ।) |
| | - अलंयोगे तृतीया भवति । | - अलं श्रमेण । |
| चतुर्थी - | - ददाति इत्यर्थे यस्मै ददाति तस्य च. वि. भवति । | - कृष्णः मित्राय पुस्तकं ददाति । |
| | - रोचते - प्रयोगे यस्मै रोचते तस्य च. वि भवति । | - मम अनुजाय मधुरं रोचते । |

| | | |
|---|---|---|
| | - 'नमः' प्रयोगे च. वि भवति । | - राम चन्द्राय नमः, सरस्वत्यै नमः । |
| | - क्रुध्यति, असूयति, द्रुह्यति, ईर्ष्यति इत्येतेषां धातूनां प्रयोगे च. वि. भवति । | - गुरुः शिष्याय क्रुध्यति । <br> - दुर्योधनः भीमाय असूयति । |
| | - कल्पते/भवति - प्रयोगे च. वि. भवति । | - विद्या विनयाय कल्पते/भवति । |
| पञ्चमी - | - विभागे सति अवधिभूतस्य पञ्चमीविभक्तिः भवति । | - सुधाकरः वाहनात् पतति । |
| | - यस्मात् भयं भवति तस्य पं. वि. भवति । | - नगरे चोरात् भयम् अधिकम् । |
| | - यस्मात् रक्षति तस्य पं. वि. भवति । | - देवः अस्मान् कष्टात् रक्षति । |
| | - 'ऋते' प्रयोगे पं.वि भवति । | - देवात् ऋते अन्या गतिः नास्ति । |
| | - प्रभृति, आरभ्य - इत्येतयोः प्रयोगे पं. वि. भवति । | - सप्ताहात् प्रभृति सः अस्वस्थः । <br> - सोमावासरात् आरभ्य सः शालां न गतवान् । |
| | - बहिर्योगे पं. वि. भवति । | - गृहात् बहिः शुनकः अस्ति । |
| | - पूर्व-पर-इत्येतयोः प्रयोगे अपि पं. वि. भवति । | - गुरुवासरः शुक्रवासरात् पूर्वः । <br> - वैशाखमासः चैत्रमासात् परः । |
| षष्ठी - | - सम्बन्धे षष्ठीविभक्तिः भवति । | - दशरथस्य पुत्रः रामः । |
| | - भाववचक षष्ठी भवति । | - ग्रन्थानां लेखनम् । |
| | - क्रियापदानां विभज्यप्रयोगे कर्मणः षष्ठी भवति । | - सः पुस्तकस्य अध्ययनं करोति । |
| सप्तमी - | - आधरस्य सप्तमीविभक्तिः भवति । | - सः आसन्दे उपविशति । |
| | - (विषयसप्तमी) | - मम संस्कृते श्रद्धा अस्ति । (संस्कृतविषये इत्यर्थे) |
| | - विश्वसिति, स्निह्यति प्रयोगे स. वि. भवति । | - भक्तः देवे विश्वसिति । <br> - माता मयि स्निह्यति । |
| | - (सत्सप्तमी) | - दिनेषु गच्छत्सु रामः प्रौढः अभवत् । <br> - तस्मिन् गतवति एषः आगतवान् । |
| | - पृथक्करणे स. वि. भवति । | - देशेषु भारतदेशः श्रेष्ठः । (षष्ठी अपि भवति ।) |



# उत्तराणि

## द्वितीया

I. १. वृक्षम् २. धर्मम् ३. शब्दम् ४. इतिहासम् ५. विद्यालयम् ६. आपणम् ७. सेविकाम् ८. पत्रिकाम् ९. जननीम् १०. पुत्रीम्

II. १. विषयम् २. प्रश्नम् ३. लेखनीम् ४. पत्रिकाम् ५. पाकम् ६. व्यवहारम् ७. देवीम् ८. शाटिकाम् ९. अभ्यासम् १०. भक्तम् ११. अङ्कनीम् १२. टिप्पणीम् १३. अम्बाम् १४. मन्त्रम् १५. कृषिम् १६. विद्यालयम् १७. ग्राहकान् १८. देवान् १९. तण्डुलान् २०. जनान् २१. छात्रान् २२. कथाः २३. पाठान् २४. बान्धवान् २५. पत्रिकाः

III. १. सर्वेषु वाक्येषु अपि 'श्लोकम्' । २. 'लेखनीम्' ।

IV. १. देवम्, जनकम्, अग्रजम्, आचार्यम् २. ग्रन्थम्, सुधाखण्डम्, स्यूतम्, दण्डम् ३. आम्रम्, पनसम्, नारिकेलम् ४. दशरथम्, सुमन्त्रम्, वसिष्ठम् ५. धर्मम्, परोपकारम्, सदाचारम् ६. मालाम्, पत्रिकाम्, पादरक्षाम्, स्थालिकाम् ७. लेखनीम्, अङ्कनीम्, कादम्बरीम्, सूचीम् ८. स्यूतम्, युतकम्, वेष्टीम्, शाटिकाम् ९. कोलाहलम्, कलहम्, चर्चाम्, आलस्यम् १०. गणेशम्, दुर्गाम्, सरस्वतीम्, लक्ष्मीम् ११. जनान्, आपणान्, दीपान्, वृक्षान् १२. भगिनीः, जननीः, महिलाः, उद्योगिनीः १३. पुरुषान्, महिलाः, वृक्षान्, वनानि १४. कवयित्रीः, गृहिणीः, कर्मकरीः १५. अङ्कनीः, लेखनीः, कर्तरीः

V. २. रामः मन्त्रान् जानाति । ३. रामः शब्दान् न जानाति । ४. रामः आपणान् जानाति । ५. रामः विज्ञानवार्ताः न जानाति । ६. रामः चर्चाः न जानाति । ७. रामः काव्यानि जानाति । ८. रामः शास्त्राणि जानाति । ९. रामः श्लोकान् न जानाति । १०. रामः सदाचारान् जानाति । ११. रामः स्यूतान् आनीतवान् । १२. रामः ग्रन्थान् आनीतवान् । १३. रामः सुधाखण्डान् न आनीतवान् । १४. रामः पुस्तकानि न आनीतवान् । १५. रामः यानपेटिकाः न आनीतवान् । १६. रामः अङ्कनीः आनीतवान् । १७. रामः लेखनीः न आनीतवान् । १८. रामः घटीः आनीतवान् । १९. रामः कर्तरीः न आनीतवान् । २०. रामः पत्रिकाः आनीतवान् ।

VI. १. पण्डितान् दृष्टवान् । २. ग्रन्थान् न परिशीलितवान् । ३. केशसूचीः क्रीतवान् । ४. उपन्यासान् न कृतवान् ।५. चिन्तनगोष्ठीः न गतवान् । ६. बालिकाः ताडितवान् । ७. बहुविधकथाः श्रुतवान् ।८. कादम्बरीः न पठितवान् । ९. पत्रिकाः पठितवान् । १०. बान्धवान् सत्कृतवान् ।

VII. गी - विद्यालयम्, मा - ग्रामम्
गी - ग्रामम्, मा - देवीपूजाम्, ग्रामम्
मा - लीलाम्, लताम्, पूजाम्, सम्भाषणम्, बीजपूरवृक्षं, फलानि, कम्, पाठम्
गी - पाठम्, श्लोकान्
मा - प्रश्नान्

गी - प्रश्नान्, उत्तराणि
मा - कक्ष्याम्
गी - नूतनं चोलम्, निचोलम्, चाकलेहान्, अध्यापकान्, आशीर्वादम्, अभिनन्दनवचनानि

VIII. (i) १. देवालयम् २. शालाम् ३. शर्कराम् ४. चन्द्रम् ५. वेदिकाम् ६. ताम् ७. अध्यापकान् ८. अध्यापिकाः ९. दीपान् १०. पुष्पाणि
(ii) १. कमलम् २. भ्रमरान् ३. त्रिकोणाकृतिम् ४. वर्तुलाकृतिम् ५. चतुरस्त्रम् ६. बिन्दुचतुरस्त्रम् ७. अष्टकोणाकृतिम् ८. वक्ररेखाम्

IX. २. लताम् ३. अध्यापकम् ४. वस्त्रापणम् ५. द्वारम् ६. भवनम् ७. उत्पीठिकाम् ८. देवम् ९. लक्ष्मीम् १०. वृद्धम्

X. १. आपणिकम्, मार्गम् । २. गृहिणीम्, अन्नम् ।
३. सम्मार्जनीम्, प्रकोष्ठम् । ४. विद्यालयम्, लेखनीम् ।
५. छात्रान्, गीताम् । ६. पौत्रान्, कथाः ।
७. महाराजम्, क्लेशान् । ८. आरक्षकम्, क्षमाम् ।
९. छात्रान्, प्रश्नान् । १०. अस्मान्, मन्त्रान् ।

XI. २. एताम्, ताम् ३. भवन्तम्, माम् ४. भवतीम्, तत् ५. तान्, ताः ६. एताः, एतान् ७. भवतः, तानि ८. भवतीः, अस्मान्

XII. (i) १. भारविम् भारवीन् २. शौरिम् शौरीन् ३. शरधिम् शरधीन् ४. परिधिम् परिधीन् ५. सुमतिम् सुमतीः ६. वाराणसीम् वाराणसीः ७. बन्धुम् बन्धून् ८. भीरुम् भीरून् ९. श्रोतारम् श्रोतॄन् १०. मातरम् मातॄः ११. पितरम् पितॄन्
(ii) १. हरिम् २. कविम् ३. मुरारिम् ४. मातरम् ५. पितरम् ६. धेनुम् ७. उदधिम् ८. वेणुम् ९. वटुम् १०. भ्रातरम्
(iii) १. कपीन् २. मुनीन् ३. शिशून् ४. शत्रून् ५. अतिथीन् ६. युक्तीः ७. कृतीः ८. पितॄन् ९. मातॄः १०. दातॄन्

## तृतीया

I. १. कर्तर्या २. कुञ्चिकया ३. उद्दङ्कनयन्त्रेण ४. सीवनयन्त्रेण ५. विमानेन ६. सूक्ष्मदर्शकेन ७. कङ्कतिकया ८. लोकयानेन ९. दूरवाण्या १०. द्विचक्रिकया ११. लेखन्या १२. कूर्चेन १३. स्यूतेन १४. तुलया १५. दन्तकूर्चेन

II. १. क्रोधेन २. कष्टेन ३. भयेन ४. दुःखेन ५. आनन्देन ६. त्वरया ७. रूक्षतया ८. जागरूकतया ९. विशेषतया १०. वैभवेन ११. सहनया १२. तृप्त्या १३. लज्जया १४. कुतूहलेन १५. निराशतया

III. १. मित्रेण सह, गतवान् । २. शिवेन सह, कृतवान् ।
३. भवत्या सह, कृतवान् । ४. पुत्र्या सह, गतवती ।
५. भगिन्या सह, कृतवान् । ६. भवता सह ।
७. सैनिकैः सह, गतवान् । ८. सखीभिः सह, गतवतीं ।
९. अस्वस्थैः सह, कृतवान् । १०. भवतीभिः सह ।

IV. १. कार्येण विना २. उपनेत्रेण विना ३. पादरक्षया विना ४. आसन्देन विना ५. दन्तैः विना ६. आत्मविश्वासेन विना ७. कार्यानेन विना ८. कूर्चेन विना ९. घट्या विना १०. धनेन विना ११. अग्निना विना १२. शय्यया विना १३. आहारेण विना १४. लोकयानेन विना १५. अन्यसाहाय्येन विना

V. १. एतया वार्तया २. एतादृशेन चिन्तनेन ३. अविवेकेन ४. धावनेन ५. दैवानुग्रहेण ६. कथनेन ७. आगमनेन ८. अनारोग्येण ९. शिरोवेदनया १०. अग्निस्पर्शेन

VI. १. त्रिचक्रिकया गृहं गच्छति । २. बैक्यानेन कार्यालयं गच्छति ।
३. लोकयानेन गृहं गच्छति । ४. सुखयानेन ग्रामं गच्छामः ।
५. विमानेन विदेशं गच्छन्ति । ६. जीप्यानेन कोलाहलस्थलं गच्छन्ति ।
७. मेटेडोर्यानेन तिरुपतिं गच्छन्ति । ८. नौकया नदीं तरन्ति ।
९. रेल्यानेन मथुरां गच्छन्ति । १०. रथेन मन्दिरं गच्छन्ति ।

VII. १. शतरूप्यकैः स्यूतम् । २. द्वादशरूप्यकैः किलोमितां शर्कराम् ।
३. सार्धत्रिशतरूप्यकैः शाटिकाम् । ४. सार्धसप्तशतरूप्यकैः उत्पीठिकाम् ।
५. त्रिंशद्रूप्यकैः कर्तरीम् ।

VIII. १. भोः मित्र, अलम् अतिविस्तरेण । २. अम्ब, अलं शोकेन ।
३. बाल, अलं साहसेन । ४. भगिनि, अलं अविवेकितया ।
५. सहोदर, अलं धावनेन ।

IX. १. छुरिकया २. बाणैः ३. सम्मार्जन्या ४. अङ्गुलीभिः, कूर्चैः ५. कया ६. जनन्या ७. सर्वैः ८. अस्माभिः ९. धनेन १०. दन्तैः ११. भक्त्या १२. आशया १३. विशेषतया १४. कलहेन १५. ताडनेन १६. अश्रुविमोचनेन १७. उच्चारणमात्रेण १८. वेगदूतयानेन, सामिसुखयानेन १९. दशभिः दिनैः २०. चिन्तया

X. अ.१ आ.३ इ.२ ई.१ उ.२ ऊ.३ ए.१ ऐ.१ ओ.३ औ.१

XI. १. एतेन, एतैः २. तया, ताभिः ३. एतया, एताभिः ४. भवता, भवद्भिः ५. भवत्या, भवतीभिः, ६. मया, अस्माभिः

XII. १. हिन्दुना हिन्दुभिः २. सेतुना सेतुभिः ३. सन्धिना सन्धिभिः ४. पुष्पाधान्या पुष्पाधानीभिः ५. आसक्त्या आसक्तिभिः ६. भुषुण्ड्या भुषुण्डिभिः ७. शङ्कुना शङ्कुभिः ८. यात्रा यातृभिः ९. कार्यकर्त्रा कार्यकर्तृभिः १०. पित्रा पितृभिः

XIII. १. श्रोत्रा २. धेन्वा ३. मुनिना ४. दुहित्रा ५. शम्भुना ६. सुमत्या ७. भ्रात्रा ८. अतिथिना ९. भीरुणा १०. नियुद्धपटुना

XIX. १. वक्तृभिः २. पितृभिः ३. सेतुभिः ४. उदरम्भरिभिः ५. रज्जुभिः ६. मधुभिः ७. सूक्तिभिः ८. मातृभिः ९. दधिभिः १०. कुटिभिः

## चतुर्थी

I. i २. पुत्र्यै ३. मित्राय ४. पत्न्यै ५. कर्मकर्यै ६. सेविकायै ७. भगिन्यै
ii. २. सखीभ्यः ३. सर्वेभ्यः ४. तेभ्यः ५. महीलाभ्यः ६. बान्धवेभ्यः

II. १. रामाय २. भगिन्यै न ३. सीतायै न ४. नलिन्यै ५. श्रीशाय ६. भीमाय न ७. पुत्र्यै ८. पुत्राय न ९. चन्द्राय १०. सूर्याय ११. ग्रामीणाय न १२. नागरिकाय १३. छात्राय न १४. अध्यापकाय न १५. पण्डिताय १६. पामराय न

III. २. शिवाय ३. दुर्गायै ४. देव्यै ५. आञ्जनेयाय ६. कृष्णाय

IV. २. वाण्यै द्रुह्यति । ३. रामाय द्रुह्यति । ४. राकेशाय क्रुध्यति । ५. गीतायै ईर्ष्यति । ६. वाण्यै असूयति । ७. रामाय असूयति ।

V. १. कष्टाय २. आरोग्याय ३. राष्ट्रैक्याय ४. विवादाय ५. सुखाय ६. शिरोवेदनायै ७. हिताय ८. तृप्त्यै ९. मदाय १०. सन्तोषाय

VI. २. तस्यै एतस्यै ३. भवते भवत्यै ४. एतेभ्यः तेभ्यः ५. एताभ्यः ताभ्यः ६. भवद्भ्यः भवतीभ्यः ७. मह्यम्, अस्मभ्यम्

VII. १. कवये कविभ्यः २. बन्धवे बन्धुभ्यः ३. अवधये अवधिभ्यः ४. भ्रात्रे भ्रातृभ्यः ५. वक्त्रे वक्तृभ्यः ६. सुमत्यै सुमतिभ्यः ७. अभिरुच्यै अभिरुचिभ्यः ८. परशवे परशुभ्यः ९. यात्रे यातृभ्यः १०. सूक्तये सूक्तिभ्यः

VIII. १. शनये २. राहवे ३. केतवे ४. सवित्रे ५. धेनवे ६. मात्रे ७. वसुमत्यै ८. दुहित्रे

IX. १. अतिथिभ्यः २. सेवाकर्तृभ्यः ३. गुरुभ्यः ४. दुहितृभ्यः ५. शतृभ्यः ६. मातृभ्यः

## पञ्चमी

I. (i) २. काशीतः अनुजः आगतवान् । ३. केदारतः स्नेहितः आगतवान् ।
४. मद्रास्तः भगिनी आगतवती । ५. तिरुवनन्तपुरतः अग्रजः आगतवान् ।
६. पुणेतः भागिनेयः आगतवान् । ७. कलकत्तातः अनुजा आगतवती ।
८. कालटितः गुरुः आगतवान् । ९. ग्रामतः पितामहः आगतवान् ।
१०. हैदराबाद्तः मातामही आगतवती ।

(ii) २. वित्तकोषतः आनीतम् । ३. विपणितः अनीताः ।
४. उद्यानतः आनीतानि । ५. मित्रगृहतः आनीताः ।
६. प्रतिवेशिगृहतः आनीतानि । ७. शालातः आनीतानि ।
८. ग्रामतः आनीतानि । ९. जलागारतः आनीतम् ।
१०. क्षीरकेन्द्रतः आनीतम् ।

II. २. शत्रुतः ३. आरक्षकतः ४. पिशाचतः ५. दुर्जनतः ६. राक्षसेभ्यः ७. चोरेभ्यः ८. कष्टेभ्यः ९. व्याघ्रेभ्यः १०. दुष्टेभ्यः

III. २. शत्रुतः जनान् ३. रावणतः सीताम् ४. अपायतः भगिनीम् ५. चोरेभ्यः जनान् ६. कष्टेभ्यः भक्तान् ७. दानवेभ्यः देवान् ८. कौरवेभ्यः पाण्डवान्

IV. १. कार्यालयतः २. सप्ताहतः ३. पठनतः ४. उत्थानतः ५. आरक्षकतः ६. भवत्तः ७. रेखातः ८. सूर्योदयतः ९. शयनतः १०. बिलतः ११. श्रवणतः १२. आपणतः

V. १. गृहात् गृहेभ्यः २. जलपातात् जलपातेभ्यः ३. अङ्गन्याः अङ्गनीभ्यः ४. तिथेः तिथिभ्यः ५. भूमेः भूमिभ्यः ६. दुहितुः दुहितृभ्यः ७. तनोः तनुभ्यः ८. श्रोतुः श्रोतृभ्यः ९. नट्याः नटीभ्यः १०. सम्पत्तेः सम्पत्तिभ्यः

VI. १. शिक्षकात् २. गणपतेः ३. सख्याः ४. काश्याः ५. शाखायाः ६. दुहितुः ७. नेतुः ८. जन्तोः ९. रज्जोः १०. भ्रमात्

VII. १. दुष्टसन्ततिभ्यः २. दधिभ्यः ३. तृणराशिभ्यः ४. अहिभ्यः ५. पौत्रीभ्यः ६. शिशुभ्यः ७. महाराजेभ्यः ८. दुष्टभ्रातृभ्यः ९. दुहितृभ्यः १०. कार्यालयेभ्यः



## षष्ठी

I. २. श्रीधरस्य भागिनेयः । ३. उमायाः जामाता ।
४. रमायाः देवरः । ५. नलिन्याः अग्रजः ।
६. नन्दिन्याः पुत्रः । ७. सीतायाः पितृव्यः ।
८. श्रीकान्तस्य आवुत्तः । ९. देवक्याः पतिः ।
१०. रोहिण्याः पौत्रः ।

II. १. धनिकानाम् २. जनानाम् ३. बालकानाम् ४. भवताम् ५. अस्माकम् ६. कुञ्चिकानाम् ७. वस्तूनाम्

III. १. योग्यस्य आहारस्य २. ग्रन्थानाम्, सरस्वत्याः ३. विषयस्य ४. कार्यक्रमस्य ५. पुस्तकस्य ६. वस्त्रादीनाम् ७. ग्रन्थानाम् ८. पात्राणाम् ९. कवचस्य, कुण्डलस्य १०. मूल्याङ्कानाम्, नाणकानाम्

IV. २. विद्युतः गमनस्य ३. जनकस्य आह्वानस्य ४. पुस्तकस्य पठनस्य ५. कोलाहलस्य श्रवणस्य ६. दूरवाण्याः आगमनस्य ७. पानीयस्य पानस्य ८. गणनायाः परिशीलनस्य ९. द्वारस्य पिधानस्य १०. यानस्य आरोहणस्य

V. २. श्लोकानाम् ३. फलानाम् ४. बालानाम् ५. पत्रिकाणाम् ६. पत्राणाम् ७. वस्त्राणाम् ८. सस्यानाम् ९. मित्राणाम् १०. वस्तूनाम्

VI. २. तस्याः, एतस्याः ३. भवतः, भवत्याः ४. एतासाम्, एतेषाम् ५. तेषाम् तासाम् ६. मम, अस्माकम् ७. भवंतीनाम्, भवताम्

VII. १. धृतेः धृतीनाम् २. तरोः तरूणाम् ३. दातुः दातृणाम् ४. दुहितुः दुहितृणाम् ५. रज्जोः रज्जूनाम् ६. अवधेः अवधीनाम् ७. शलाटोः शलाटूनाम् ८. प्रशस्तेः प्रशस्तीनाम् ९. निघण्टोः निघण्टूनाम् १०. भ्रातुः भ्रातृणाम्

VIII. १. राघोः २. वक्तुः ३. यातुः ४. मधुनः ५. प्रकृतेः ६. कवेः ७. रज्जोः ८. रूढेः ९. जन्तोः १०. अभिरुचेः

IX. १. प्रतिकृतीनाम् २. छदीनाम् ३. पलाण्डूनाम् ४. पशूनाम् ५. मातृणाम् ६. कार्यकर्तृणाम् ७. शिशूनाम् ८. दातृणाम्

## सप्तमी

I. २. जयनगरे ३. उद्याने सस्यम् ४. सस्ये फलम् ५. फले बीजानि ६. विद्यालये ७. प्रकोष्ठे ग्रन्थालयः ८. ग्रन्थालये ग्रन्थः ९. ग्रन्थे नीतिविषयाः १०. पाठशालायाम् वाटिका ११. वाटिकायां लता १२. लतायां शाखा १३. शाखायां पिपीलिका १४. नगर्याम् विपणिः १५. विपण्यां वीथी १६. वीथ्यां प्रदर्शिनी १७. प्रदर्शिन्याम् अधिकारिणी

II. १. संस्कृते २. अलङ्कारे ३. मधुरखाद्ये ४. भक्ते ५. चित्रलेखने

III. १. तस्मिन् २. जनेषु, तेषु ३. स्वशक्तौ ४. याने ५. वचनेषु ६. पुत्रेषु ७. दुर्जनेषु ८. राजनीतिजनेषु

IV. १. चोरं कण्ठे २. सीतां केशेषु ३. अन्यबालकं कपोले ४. पुत्रं मस्तके ५. अन्यमल्लम्

उदरे ६. शत्रुं कण्ठे

V. १. चन्दमामायाम् २. लतायाम् ३. धनस्यूते ४. सञ्चिकायाम् ५. चैत्रमासे ६. मन्त्रालये ७. दिने ८. नगरे ९. पुराणेषु १०. सचिवेषु ११. पत्रालये १२. प्राणिषु १३. पत्रिकासु १४. दुश्यन्ते

VI. २. एतस्मिन् ३. तस्याम् ४. एतस्याम् ५. भवति ६. भवत्याम् ७. मयि ८. तेषु ९. एतेषु १०. भवत्सु ११. तासु १२. भवतीषु १३. एतासु १४. अस्मासु

VII. १. नाभौ नाभिषु २. भीरौ भीरुषु ३. रज्जौ रज्जुषु ४. सन्ततौ सन्ततिषु ५. मातरि मातृषु ६. श्रोतरि श्रोतृषु ७. कार्यकर्तरि कार्यकर्तृषु ८. गुणाणौ गुणाणुषु ९. वायौ वायुषु १०. संस्कृतौ संस्कृतिषु

VIII. १. भ्रातरि २. दाशरथौ ३. पितरि ४. मातरि ५. गुरौ ६. दुहितरि ७. भारतीयसंस्कृतौ ८. धेनौ

IX. १. शिशुषु २. मुनिषु ३. भ्रातृषु ४. नेतृषु ५. स्नायुषु ६. दधिषु ७. विपणिषु ८. यातृषु

## सम्बोधनम्

१. कृष्ण ! २. भगिनि ! ३. राधे ! ४. मित्र ! ५. अम्ब ! ६. मालिनि ! ७. आर्ये ! ८. मान्ये ! ९. लक्ष्मि ! १०. सीते ! ११. रवे ! १२. पितः ! १३. धेनो ! १४. मातः ! १५. श्रोतः ! १६. शम्भो !

## मिश्राभ्यासः

I. (i) १-८, २-४, ३-१, ४-५, ५-२, ६-३, ७-१०, ८-६, ९-७, १०-९
(ii) १-३, २-६, ३-११, ४-१०, ५-४, ६-९, ७-८, ८-५, ९-७, १०-२

II. १. विद्यालयम् २. अङ्गनीः ३. शालाम् ४. अध्यापकम् ५. धनिकम् ६. भगिन्या ७. घटीम् ७. लेखन्या ९. सख्यै १०. बालिकाभ्यः ११. देव्यै १२. देवम् १३. भगिन्यै १४. दुर्जनेभ्यः १५. कौरवेभ्यः १६. भवतः १७. कार्यक्रमस्य १८. पाकशालायाम् १९. तस्मिन् २०. उदरे २१. अम्ब ! २२ भगिनि ! २३. अरविन्द । २४. लोकयानैः २५. राधायै

III. १. लेखनीः २. छुरिकया ३. चक्रेण ४. पुत्र्यै ५. तस्मिन् ६. दन्तैः ७. भवता ८. सर्पात् ९. कोलाहलेन १०. अध्यापकम् ११.कतिरूप्यकैः १२. त्रिचक्रिकया १३. लक्ष्मि ! १४. कस्मै १५. मह्यम् १६. बालेषु १७. आत्मीयेषु १८. एतस्मात् १९. कार्यक्रमस्य २०. अपघातात्

IV. १. धातूनाम् २. कवीन् ३. श्रोतृणाम् ४. कार्यकर्तृभ्यः ५. अभिरुचेः ६. मातरम् ७. सूक्तिः ८. विभक्तेः ९. दध्ना १०. बाहुभ्याम् ११. क्रूरपशुभ्यः १२. जनेषु १३. विपत्तिभ्यः १४. रज्जवः १५. हरे !

